भर्तृहरिविरचितं

# नीतिशतकम्

## (NĪTIŚATAKA)

महाबलोपाह्वकृष्णशास्त्रिकृतया

अर्थद्योतनिकाव्याख्यया पाठान्तर-परिशिष्टादिभिश्च समेतम्



श्रीमदिन्दिराकान्तचरणान्तेवासिना

**नारायण राम आचार्य "काव्यतीर्थ"**

इत्यनेन संशोधितम्




निर्णयसागर-मुद्रणालयम्, मुंबई

मूल्यं १ रूप्यकः

भर्तृहरिविरचितं

# नीतिशतकम्

## (NĪTIŚATAKA)

महाबलोपाह्वकृष्णशास्त्रिकृतया
अर्थद्योतनिकाव्याख्यया पाठान्तर–परिशिष्टादिभिश्च समेतम्



श्रीमदिन्दिराकान्तचरणान्तेवासिना
**नारायण राम आचार्य "काव्यतीर्थ"**
इत्यनेन संशोधितम्

द्वादशं संस्करणम् : १९४९

**निर्णयसागर-मुद्रणालयम्, मुंबई**

मूल्यं १ रूप्यकः

# नीतिशतकस्थसुभाषितसंग्रहः

क्षीयन्ते खलु भूषणानि सततं, वाग्भूषणं भूषणम् ।
विद्या राजसुपूजिता न तु धनं विद्याविहीनः पशुः ।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति ।
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ।
विभूषणं मौनमपण्डितानाम् ।
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ।
सर्वस्यौषधमस्ति शास्त्रविहितं, मूर्खस्य नास्त्यौषधम् ।
भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ।
भवति न बिसतन्तुर्वारणं वारणानाम् ।
सत्संगत्तिः कथय किं न करोति पुंसाम् ।
प्रारब्धमुत्तमजना न परित्यजन्ति ।
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ।
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ।
अहह महतां निःसीमानश्चरित्रविभूतयः ।
प्रकृतिरियं सत्त्ववतां, न खलु वयस्तेजसो हेतुः ।
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ।
सर्वे गुणाः काञ्चनमाश्रयन्ति ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ।
अवस्था वस्तूनि प्रथयति च संकोचयति च ।
नानाफलैः फलति कल्पलतेव भूमिः ।
वाराङ्गनेव नृपनीतिरनेकरूपा ।
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ।
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ।
दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ।
तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः ।
मनसि सप्त शल्यानि मे ।
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः ।
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।

नीचस्य गोचरगतैः सुखमाप्यते कैः ।
छायेव मैत्री खल-सज्जनानाम् ।
निष्कारणवैरिणो जगति ।
येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ।
प्रकृतिसिद्धमिदं हि महात्मनाम् ।
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ।
विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ।
संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ।
जगति बहुमताः कस्य नाभ्यर्चनीयाः ।
स्वभाव एवैष परोपकारिणाम् ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ।
सन्तः स्वयं परहिताभिहिताभियोगाः ।
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ।
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ।
न निश्चितार्थाद्विरमन्ति धीराः ।
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ।
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ।
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ।
आलस्यं हि महान् शत्रुः ।
ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ।
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ।
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ।
भाग्यानि पूर्वतपसा खलु संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ।
भवति हृदयदाही शल्यतुल्यो विपाकः ।
नाभाव्यं भवतीह कर्मवशतो, भाव्यस्य नाशः कुतः ।



श्रीमद्भर्तृहरिकृतं

# नीतिशतकम्

## अर्थद्योतनिकाव्याख्यया समेतम्

भक्तचित्तानुरोधेन धत्ते नानाकृतीः स्वयम् ॥
अद्वैतानन्दरूपो यस्तस्मै भगवते नमः ॥ १ ॥
गोदावाक्तटवर्तिनासिकमहाक्षेत्रे पवित्रे वसन्
बालंभट्टतनूभवो जननभूर्लक्ष्मीर्यदीया सती ॥
तेनेयं विवृतिर्महाबलपराभिख्येन कृष्णेन हि
श्रीमद्भर्तृहरिप्रणीतशतकत्रय्याः कृता यत्नतः ॥ २ ॥
अर्थद्योतनिका भूयाद्विदुषां प्रीतयेऽनिशम् ॥
त एवात्र विचिन्वन्तु गुणदोषौ विमत्सराः ॥ ३ ॥

इह खलु राजर्षिप्रवरः श्रीभर्तृहरिरुभयलोकसाधकं नीति-शृङ्गार-वैराग्याख्य-शतकत्रयात्मकं ग्रन्थं चिकीर्षुः सदाचरणस्य नीतिज्ञानपूर्वकत्वात्तज्ज्ञानाय प्रथमं नीतिशतकमारभमाणः प्रारिप्सितस्य ग्रन्थस्याविघ्नतासिद्धये नमस्कारात्मकं मङ्गलमाचरति—

**दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ॥**
**स्वानुभूत्यैकमानाय नमः शान्ताय तेजसे ॥ १ ॥**

**दिगिति** ॥ दिक् दिशा, कालो भूतादिः, 'आदि'शब्देन देशवयआदि । दिक् च कालश्च तावादी येषां देशवयआदीनां तैरनवच्छिन्नाऽव्याप्ताऽत एवानन्ता चिन्मात्रा चिद्रूपा मूर्तिर्देहो यस्य तस्मै, शान्ताय शान्तस्वरूपाय, तेजसे प्रकाशरूपाय, भगवते ब्रह्मणे नमोऽस्तु । ननु यं नमसि तदस्तित्वविषये किं मानं? तत्र हेतुगर्भं विशेषणमाह—**स्वानुभूत्यैकमानाये**ति । स्वस्यानुभूतिरनुभवः, यद्वा,–स्वा स्वकीयानुभूतिः सैवैकं मानमस्तित्वज्ञापकं यस्य तस्मै । अस्मिन् शतकत्रये दृष्टेषु बहुषु पुस्तकेषु कचिच्छ्लोकानां पूर्वापरभावव्यत्ययस्तथा परस्परमिश्रीभावश्च दृश्यते, तद्विचारोऽत्र न कृतः; स सुधीभिर्विचारणीयः । अनुष्टुब् वृत्तम् ॥

एवं हि पुरा वृत्तम्—जरारोगादिनाशकमायुर्वर्धकं किमपि फलं कुतश्चि-

ब्राह्मणाद्भर्तृहरिणा लब्धं, तत्स्वपत्न्यै राज्ञा दत्तं, साप्यन्यसक्तत्वादन्यस्मै दत्तवती, सोऽपि पुरुषोऽन्यस्यै दत्तवान्, सापि पुना राज्ञे दत्तवती, तद्दृष्ट्वा परमं वैराग्यमापन्नो राजा स्वसहितान्पत्न्यादीन्निन्दति—

**यां चिन्तयामि सततं मयि सा विरक्ता,**
**साप्यन्यमिच्छति जनं, स जनोऽन्यसक्तः ॥**
**अस्मत्कृते च परितुष्यति काचिदन्या,**
**धिक् तां च तं च मदनं च इमां च मां च ॥ २ ॥**

यामिति ॥ अहं यां सततं निरन्तरं हृदि चिन्तयामि सा मयि विरक्ताऽस्ति, साप्यन्यं जनं जारपुरुषमिच्छति वाञ्छति, स जनोऽप्यन्यस्मिन्स्त्रीजने सक्त आसक्तः; यद्वा,—अन्यस्यां सक्तः, सर्वनाम्नो वृत्तिमात्रे पुंवद्भावात् । अस्मत्कृते चास्मदर्थे त्वन्या काचित् परितुष्यति संतोषं प्राप्नोति; अतो याऽस्मदर्थे परितुष्यति तां धिक्, अन्यसक्तं तं जनं धिक्, इमां मदीयां स्त्रियं, मां च धिक्, इदं सर्वं मदनकृतमिति तं मदनमपि धिगित्यर्थः । वसन्ततिलका वृत्तम् । तदुक्तं वृत्तरत्नाकरे—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥

अत्र लोके हि त्रिविधा जनाः—अज्ञः सुज्ञोऽल्पज्ञश्चेति । तत्राऽऽद्यः सुखसाध्यः, द्वितीयस्तु सुखतरसाध्यः, तृतीयस्त्वसाध्य इत्याह—

**अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ॥**
**ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति ॥ ३ ॥**

अज्ञ इति ॥ न जानातीत्यज्ञः, अकिंचिज्ज्ञ इत्यर्थः । स तु सुखं यथा स्यात्तथाऽऽराध्यः सेव्यः । विशेषं जानातीति विशेषज्ञः, स तु सुखतरमतिसुखेनाऽऽराध्यते । ज्ञानस्य लवो लेशस्तेन दुर्विदग्धः । 'दुः'शब्दो दुष्टार्थकः हिताहितविवेकशून्यत्वेन दुष्टं यथा स्यात्तथा चतुरः । ज्ञानलेशमात्रेणाऽऽत्मानं पण्डितंमन्य इति यावत् । एतादृशं नरं ब्रह्माऽपि चतुर्मुखोऽपि न रञ्जयति न साधयति, न वशीकरोतीति यावत्; काऽन्येषां वार्तेत्यर्थः । आर्या वृत्तम् । तदुक्तं श्रुतबोधे—'यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥' इति ॥

मूर्खजनचित्ताराधनं दुर्घटमिति बहुदृष्टान्तैः स्पष्टयति श्लोकद्वयेन—

**प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरात्**
**समुद्रमपि संतरेत् प्रचलदूर्मिमालाकुलम् ॥**

**भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारये-**
**न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४ ॥**

**प्रसह्येति** ॥ मकरो जलजन्तुविशेषः, तस्य वक्त्रं मुखं तत्संबन्धिन्यो या दंष्ट्रास्तासामन्तरं मध्यं तस्मात्। 'दंष्ट्राङ्कुरात्' इत्यपि पाठः। तन्मुखपतितमपि मणिं प्रसह्य हठादुद्धरेन्निष्कासयेत्। यथा प्रचलन्त्यो या ऊर्मिमालास्तरङ्गपङ्क्तयस्ताभिराकुलं व्याप्तं समुद्रमपि संतरेत्पारं गच्छेत्। तथा कोपितं भुजङ्गं सर्पं हस्तेनोद्धृत्य शिरसि मस्तके पुष्पवत्कोऽपि धारयेत्, परंतु सत्यसति वा वस्तुनि प्रतिनिविष्टमाविष्टं मूर्खजनस्य चित्तं नाराधयेन्न साधयेत्, न चालयेदित्यर्थः। पृथ्वी वृत्तम्। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति तल्लक्षणात् ॥

किं च,—

**लभेत सिकतासु तैलमपि यत्नतः पीडयन्**
**पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ॥**
**कदाचिदपि पर्यटञ्शशविषाणमासादये-**
**न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥**

**लभेतेति** ॥ कश्चित्सिकताः यत्नतस्तैलनिष्कासनोपायेन पीडयन्मर्दयन् सिकतासु वालुकास्वपि तैलं लभेत प्राप्नुयात्। तथा पिपासार्दितस्तृषापीडितो मृगतृष्णिकासु मृगजलेषु सलिलमुदकं कदाचित्पिबेत्। कदाचित् पर्यटन् पर्यटनशीलः पुरुषः शशो मृगविशेषस्तस्य विषाणं शृङ्गं ब्रह्मणाऽसृष्टमप्यासादयेत्प्राप्नुयात्, परंतु प्रतिनिविष्टमूर्खजनचित्तं नाराधयेत्। पूर्वोक्तमेव वृत्तम् ॥

खलजनाः केनाप्युपायेन सन्मार्गे वर्तयितुमतिदुःशका इत्याह—

**व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते**
**भेत्तुं वज्रमणीञ्छिरीषकुसुमप्रान्तेन संनह्यते ॥**
**माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते**
**नेतुं वाञ्छति यः सतां पथि खलान् सूक्तैः सुधास्यन्दिभिः ॥ ६ ॥**

**व्यालमिति** ॥ यः सतां पथि मार्गे सुधाममृतं स्यन्दन्ते प्रस्रवन्ति तच्छीलैः सूक्तैः सुवचनैः खलान्दुर्जनान्नेतुं वाञ्छतीच्छति असौ व्यालं सर्पं दुष्टगजं वा। 'व्यालो दुष्टगजे सर्पे' इति मेदिनी। बालैः कोमलैर्मृणालतन्तुभिः कमलबिसतन्तुभी रोद्धुं बद्धुं समुज्जृम्भते सम्यक्चेष्टते। तथा वज्रमणीन्हीरकमणीन्। 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः। शिरीषकुसुमस्य पुष्पविशेषस्य 'शिरस'

इति ख्यातस्य । 'शिरीषस्तु कपीतनः' इत्यमरः । प्रान्तेन प्रान्तभागेन भेत्तुं छेत्तुं संनह्यते संनद्धो भवति । तथा क्षाराम्बुधेः क्षारजलसमुद्रस्य माधुर्यं मृष्टजलत्वं मधुबिन्दुना माक्षिकबिन्दुना । 'मधु क्षौद्रं माक्षिकादि' इत्यमरः । रचयितुं कर्तुमीहते चेष्टते । एवं च व्यालादयो यथा मृणालतन्त्वादिभिर्बन्धनादि कर्तुमशक्यास्तथा केनाप्युपायेन खलजनाः सन्मार्गे वर्तयितुं दुःशका इति भावः । शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति तल्लक्षणात् ॥

इदानीमज्ञजनानामज्ञताऽऽवरणोपायमाह—

**स्वायत्तमेकान्तहितं विधात्रा विनिर्मितं छादनमज्ञतायाः ॥**
**विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥ ७ ॥**

**स्वायत्त**मिति ॥ विधात्रा ब्रह्मणा अज्ञताया मौर्ख्यस्य छादनमावरणम् । 'छदिर् आवरणे' धातुः । मौनं तूष्णींभावः विनिर्मितं रचितम् । कीदृशम् ? स्वस्याऽऽत्मन आयत्तमधीनम् । 'अधीनो निघ्न आयत्तः' इत्यमरः । पुनः कीदृशम् ? एकान्तहितं एकान्तं अतिशयितं हितं यस्मिंस्तत् । 'अथातिशयो भरः' इत्युपक्रम्य 'तीव्रैकान्तनितान्तानि' इत्यमरः । विशेषतो विशेषेण सर्वं विदन्ति जानन्ति ते सर्वविदस्तेषां समाजे समूहे, सभायामिति यावत् । पण्डा सदसद्विवेकवती बुद्धिः संजाता येषां ते पण्डिताः, न पण्डिता अपण्डिताः, तेषां विभूषणमलंकरणं भवति । अज्ञस्य स्वाज्ञानावरणे मौनादन्य उपायो लोके नास्तीति भावः । इन्द्रवज्रा वृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति तल्लक्षणात् ॥

किंचिज्ज्ञानात्सर्वज्ञत्वाभिमानो भवति, विशेषज्ञानात्तु तदभाव इति स्वदृष्टान्तेनाऽऽह—

**यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ॥**
**यदा किंचित्किंचिद्बुधजनसकाशादवगतं**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ८ ॥**

**यदे**ति ॥ यदाऽहं किंचिज्जानातीति किंचिज्ज्ञः, द्वाभ्यां मुखशुण्डाभ्यां पिबतीति द्विपो गजः, यथा मदेन मदजलेनान्धो विवेकशून्यस्तथाऽहमति-

किंचिज्ज्ञत्वमदेनान्धः कार्याकार्यविवेकशून्यः समभवमासम्, तदा सर्वमखिलं जानातीति सर्वज्ञोऽस्मीति मम मनोऽवलिप्तं गर्वितमभवत्। यदा बुधजनसकाशाद्विद्वज्जनसकाशात्किंचित्किंचिच्छास्त्रादिकमवगतं प्राप्तं तदा मूर्खोऽस्मीति मम मनोऽभवदिति पूर्वस्यैवानुषङ्गः। ततो ज्वर इव मे मदो व्यपगतो नष्टः। यथा सदौषधेन ज्वरो गच्छति तथा विद्वज्जनसकाशात्प्राप्तेन ज्ञानेनाहं सर्वज्ञोऽस्मीत्यभिमानो गत इत्यर्थः। 'ज्वर' इति सर्वरोगोपलक्षणम्। शिखरिणी वृत्तम्। 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणात्॥

इदानीं तुच्छेषु विषयेषु लुब्धं जनं श्वदृष्टान्तेन निन्दति—

**कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं**
**निरुपमरसं प्रीत्या खादन्नरास्थि निरामिषम्॥**
**सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते**
**न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम्॥ ९॥**

**कृमिकुलचित**मिति॥ कृमीणां कीटानां कुलैः समूहैश्चितं व्याप्तम्। लाला मुखमलं तेन क्लिन्नमार्द्रम्। 'आर्द्रं सार्द्रं क्लिन्नम्' इत्यमरः। विगन्धि दुर्गन्धमत एव जुगुप्सितं निन्द्यम्। निरामिषं निर्गतमामिषं मांसं यस्मात्तत्, शुष्कमित्यर्थः। नरास्थि मनुष्यदेहास्थि, निर्गता उपमा यस्यैतादृशोऽनुपमो रसः स्वादो यस्मिन्कर्मणि यथा स्यात्तथा। 'रसो गन्धरसे जले' इत्यारभ्य 'पारदस्वादयोः पुमान्' इति मेदिनी। प्रीत्या प्रीतिपूर्वकं खादन्भुञ्जन् श्वा शुनकः 'शुनको भषकः श्वा स्यात्' इत्यमरः। पार्श्वस्थं निकटस्थितं सुरपतिमिन्द्रं विलोक्यापि न शङ्कते न लज्जते। हि यस्मात्क्षुद्रोऽल्पो जन्तुः प्राणी परिग्रहस्य फल्गुतां तुच्छतां न गणयति न मनुते, किंत्वतितुच्छं लोकैर्निन्दितमपि कर्म करोत्येवेति भावः। हरिणी वृत्तम्। 'रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात्॥

उत्तमपदाच्च्युतः पुरुषोऽधः पतनं प्राप्नुवन्क्षुद्रपदं प्राप्नोति, न पुनरुच्चपदमिति गङ्गादृष्टान्तेनाह—

**शिरः शार्वं स्वर्गात्पतति शिरसस्तत्क्षितिधरं**
**महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम्॥**

---

पाठा०—१ निरुपमरसप्रीत्या. २ पशुपतिशिरस्तः क्षिति°.

**अधोऽधो गङ्गेयं पदमुपगता स्तोकमथवा**
**विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥**

**शिरः शार्वमिति** ॥ विष्णुपदादुत्तमान्निर्गता गङ्गा, स्वर्गात्प्रथमं शर्वः शिवस्तस्येदं शार्वं शिरो मस्तकं प्रति पतति, तत्ततः शिरसः क्षितिधरं हिमालयपर्वतं पतति । उत्तुङ्गादत्युच्चान्महीं पृथ्वीं धारयतीति महीध्रः पर्वतस्तस्मात् । मूलविभुजादित्वात्कः । अवनिं भूमिं पतति, अवनेश्चापि सहस्रमुखैर्जलधिं समुद्रं पतति, एवमियं गङ्गा क्रमेणाधोधः पतन्ती, स्तोकमल्पं पदमुपगता । अथवा विवेकभ्रष्टानां सदसद्विचारशून्यानां विनिपातो विशेषेण पतनम्, नीचस्थितिरिति यावत् । शतमनेकानि मुखानि द्वाराणि यस्य यस्मिन्वा एतादृशो भवति । यथा गङ्गा उत्तमस्थानाद्विष्णुपदान्निर्गता शिवमस्तकं प्रत्याyata एतदपेक्षयाऽन्यदुत्तमं निवासयोग्यं स्थानं नास्तीति मनसि विचारमकृत्वा क्रमेण पर्वतादौ पतन्ती सहस्रमुखैर्जलधिं, डलयोरैक्याज्जडाश्रमं नीचमेव पदं प्राप्ता न पुनरुत्तमं पदं, तथैव विवेकशून्याः पुरुषा ह्यनेकद्वारैर्नीचपदमेव प्राप्नुवन्ति, नोत्तमं पदमिति भावः । शिखरिणी वृत्तम् । लक्षणं तूक्तमेव ॥

सर्वोपद्रवनिवर्तकोपायः शास्त्रे लोके च दृष्टः, मूर्खबोधकोपायो न क्वापि दृष्ट इत्याह—

**शक्यो वारयितुं जलेन हुतभुक्, छत्रेण सूर्यातपो,**
**नागेन्द्रो निशिताङ्कुशेन समदो, दण्डेन गौगर्दभौ ॥**
**व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं,**
**सर्वस्यौषधमस्ति शास्त्रविहितं, मूर्खस्य नास्त्यौषधम् ॥ ११ ॥**

**शक्य** इति ॥ हुतं हविरादि भुङ्क्ते इति हुतभुगग्निः । 'हिरण्यरेता हुतभुक्' इत्यमरः । जलेनोदकेन वारयितुं शमयितुं शक्यः । 'शक्य' इति क्रियाया यथासंभवं सर्वत्रान्वयः । सूर्यस्यातप उष्णत्वं छत्रेण, तथा समदो मदयुक्तो नागेन्द्रो गजो निशितेनाङ्कुशेन, तथा गौश्च गर्दभश्च तौ दण्डेन लगुडेन । 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः । व्याधी रोगो भेषजस्यौषधस्य सङ्ग्रहैः सेवनैः, तथा विषं विविधैरनेकैर्मन्त्रप्रयोगैः । एवं सर्वस्योपद्रवस्य शास्त्रविहितमौषधं निवर्तकोपायोऽस्ति, परंतु मूर्खस्यौषधं शास्त्रविहितं लौकिकं च नास्ति, मूर्खत्वविघातक उपायो नास्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तमेव ॥

यस्तु साहित्यशास्त्राद्यनभिज्ञः स तु नराकारः पशुरेवेत्याह—

**साहित्यसङ्गीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः ॥**
**तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥ १२ ॥**

**साहित्येति** ॥ साहित्यं काव्यालङ्कारादि, संगीतं गानादि, कला शिल्पं, ताभिर्विहीनो रहितो नरः पुच्छं लाङ्गूलं विषाणं शृङ्गं च ताभ्यां हीनः 'पुच्छोऽस्त्री लूमलाङ्गूले', 'अतस्त्रिषु विषाणं स्यात्पशुशृङ्गे' इति चामरः। साक्षात् पशुरेव। ननु पशवस्तृणं भक्षयन्ति, अयं तु कुतो न खादतीति चेत्तत्राह–**तृणमिति**। तृणं न खादन्नपि भक्षयन्नपि जीवमान इति यत् तत्पशूनां परममुत्कृष्टं भागधेयमदृष्टम्। अन्यथा तेषां तृणाद्यलाभाज्जीवनमपि न स्यादिति भावः। तस्मान्मनुष्येण साहित्यादिकमवश्यं संपादनीयमिति तात्पर्यम्। उपजातिर्वृत्तम्। 'स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' इति तल्लक्षणात् ॥

येषां विद्यादि नास्ति, तेषां पशुभूतानां मनुष्यरूपेण भूमौ संचरणमित्याह—

**येषां न विद्या न तपो न दानं ज्ञानं न[1] शीलं न गुणो न धर्मः ॥**
**ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ १३ ॥**

**येषामिति** ॥ येषां विद्या व्याकरणमीमांसादिः न नास्ति, तपो व्रतोपवासादि न, दानं सत्पात्रे गवादिधनार्पणं न, ज्ञानं शास्त्रीयं व्यावहारिकं च न, शीलं सद्वृत्तं न, गुणः सत्त्वगुणः लोकानेकविधकार्यसाधको वा न, धर्मः सदाचरणादिः न, ते मृगाः पशुभूताः। 'मृगः पशौ कुरङ्गे च' इति मेदिनी। नरा भुवि भारभूताः सन्तो मनुष्यरूपेण चरन्ति संचरन्ति। विद्याविहीना मनुष्यरूपेणोपलभ्यमाना अपि पृथिव्या भारभूताः साक्षात्पशव एवेत्यर्थः। तथा च पुरुषेण पशुत्वनिवारकविद्यादिकमवश्यं संपादनीयमित्यनेन सूचितम्। पूर्वोक्तमेव वृत्तम् ॥

पर्वतादौ वनचरैः सह भ्रमणं श्रेष्ठम्, न मूर्खजनसंसर्गः स्वर्गेऽप्युचित इत्याह—

**वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ॥**
**न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि ॥ १४ ॥**

---

पाठा०–१ च शीलं.

**वरमिति** ॥ पर्वतदुर्गेषु गन्तुमशक्येष्वपि स्थानेषु वने चरन्तीति वनचरा व्याघ्रादयस्तैः सह भ्रान्तं भ्रमणम्। भावे क्तः। वरमुचितम्। सुरेन्द्रभवनेष्वपि मूर्खजनस्य संपर्कः संसर्गो वरो न भवति। तथा च मूर्खजनसंसर्गः सर्वथा त्याज्य इति तात्पर्यम्। अनुष्टुब् वृत्तम् ॥

यस्य राज्ञो देशे कवयो निर्धनाः सन्ति, स राज्ञो दोष इति मणिपरीक्षकदृष्टान्तेनाह—

**शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा**
**विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ॥**
**तज्जाड्य वसुधाधिपस्य सुधियो ह्यर्थं विनापीश्वराः**
**कुत्स्याः स्युः कुपरीक्षकैर्न मणयो यैरर्घतः पातिताः ॥ १५ ॥**

**शास्त्रोपस्कृतेति** ॥ यस्य प्रभो राज्ञो विषये देशे शास्त्रे व्याकरणादिनोपस्कृता अलंकृता ये शब्दास्तैः सुन्दरा गीर्वाणी येषां ते तथा शिष्येभ्यः प्रदेयो दातुं योग्यः, अध्यापनयोग्य इति यावत्। आगमः शास्त्रं येषामत एव विख्याताः प्रसिद्धाः सुधियो निर्धना धनरहिता वसन्ति तद्वसुधायाः पृथिव्या अधिपस्य राज्ञो जाड्यं दोषोऽस्ति, न सुधियाम्। हि यतस्तेऽर्थं द्रव्यादिं विनापीश्वराः सन्ति, तत्र दृष्टान्तः—यैः कुपरीक्षकैर्मणयो रत्नादयोऽर्घतो मूल्यतः पातिताः बहुमूल्याः मणयोऽल्पमूल्याः कृता अतस्ते कुपरीक्षका ज्ञानशून्याः कुत्स्या निन्द्याः, न तु मणय इत्यर्थः। तथा च रत्नानां मूल्यं यथार्थमजानन्तः परीक्षका यथा निन्द्यास्तथोक्तविधकवीनां वास्तवं स्वरूपमजानन्तो राजानोऽपि निन्द्या इति भावः। अनेन सत्यैश्वर्ये राज्ञा कवयः संमाननीया इति व्यज्यते। शार्दूलविक्रीडितं वृत्तम् ॥

इदानीं राज्ञा विद्वांसः संमाननीयाः, न तु गर्वेण तिरस्करणीया इति नीतिं विद्याप्रशंसापूर्वकं तं प्रति बोधयन्नाह द्वाभ्याम्—

**हर्तुर्याति न गोचरं, किमपि शं पुष्णाति यत्सर्वदा,**
**ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ॥**
**कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं**
**येषां तान्प्रति मानमुज्झत नृपाः ! कस्तैः सह स्पर्धते ॥ १६ ॥**

---

**पाठा०**—१ कवयोऽप्यर्थं.

**हर्तु**रिति ॥ यद्धनं हर्तुश्चोरादेर्गोचरमक्षिविषयं न याति न प्राप्नोति, तथा किमपि शं कल्याणं पुष्णाति पोषयति, सर्वदाऽर्थिभ्यो याचकेभ्योऽनिशं निरन्तरं प्रतिपाद्यमानं दीयमानमपि परामुत्कृष्टां वृद्धिं प्राप्नोति । वर्धत इति यावत् । तदुक्तम्—'अपूर्वः शब्दकोशोऽयं विद्यते तव भारति ! । व्ययतो वृद्धिमाप्नोति क्षयं प्राप्नोति गोपनात् ॥' इति । किंच कल्पान्तेष्वपि निधनं नाशं न प्रयाति न गच्छति एतादृशविद्याख्यं विद्यानामकमन्तर्धनं गुप्तं धनं येषां तैः सह कः पुरुषः स्पर्धते स्पर्धां करोति ? न कोऽपि । अतो हे नृपाः ! तान्प्रति 'वयं धनवन्तो राजानः, इमे त्वतिदरिद्रास्तुच्छाः' इति मानं गर्वमुज्झत, त्यजतेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

किं च,—

**अधिगतपरमार्थान्पण्डितान् माऽवमंस्था-**
**स्तृणमिव लघु लक्ष्मीर्नैव तान्संरुणद्धि ॥**
**अभिनवमदलेखाश्यामगण्डस्थलानां**
**भवति न विसतन्तुर्वारणं वारणानाम् ॥ १७ ॥**

**अधिगते**ति ॥ अधिगतः प्राप्तः परमार्थो यैस्तान्पण्डितान् लघु तुच्छं तृणमिव माऽवमंस्था अपमानं मा कुरु । यतो लक्ष्मीरपि तान् नैव संरुणद्धि रोद्धुं न शक्नोति । तत्र दृष्टान्तः—अभिनवो नूतनो यो मदो मदजलं तस्य लेखा पङ्क्तिस्तया श्यामे गण्डस्थले येषां तेषां वारणानां गजानां बिसतन्तुः कमलनालतन्तुर्वारणं रोधको न भवति । मालिनी वृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणात् ॥

आनुषङ्गिकगुणनिवर्तको लोको दृष्टः, स्वभावसिद्धगुणं निवर्तयितुं कोऽपि समर्थो नास्तीति हंसदृष्टान्तेन दर्शयन्नाह—

**अम्भोजिनीवनविलासनिवासमेव**
**हंसस्य हन्ति नितरां कुपितो विधाता ॥**
**न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां**
**वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १८ ॥**

**अम्भोजिनी**ति ॥ कुपितो विधाता ब्रह्मा हंसस्याम्भोजिनीनां कमलिनीनां वनं निवासस्थानम् । 'वनं नपुंसकं तीरे निवासे' इति मेदिनी । तत्र

यो विलासेन निवासस्तमेव नितरां हन्ति नाशयति, परं त्वस्य हंसस्य दुग्धं च जलं च तयोर्भेदः पृथक्करणं तस्य विधौ विधाने प्रसिद्धां लोकविश्रुतां वैदग्ध्यं स्वाभाविकचातुर्यं तस्य कीर्तिमपहर्तुं दूरीकर्तुमसौ ब्रह्मापि न समर्थः, काऽन्यस्य वार्तेत्यर्थः । वसन्ततिलका वृत्तम् । लक्षणं तूक्तमेव ॥

'अङ्गदाद्यलङ्कारेभ्यो वागलङ्कारो गरीयानित्यवश्यं स संपादनीय' इत्यभिप्रायेणाह—

**केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला**
**न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ॥**
**वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते,**
**क्षीयन्ते खलु भूषणानि सततं, वाग्भूषणं भूषणम् ॥ १९ ॥**

**केयूरा** इति । केयूराः बाहुभूषणानि पुरुषं न विभूषयन्त्यलङ्कुर्वन्ति । चन्द्रोज्ज्वलाश्चन्द्रकान्तिसदृशा हारा मुक्तादिरचिता माला न, तथा स्नानं न, विलेपनं चन्दनादि न, कुसुमं पुष्पं न, अलङ्कृता मूर्धजाः केशा न, किं तु एका वाणी पुरुषं समलङ्करोति सम्यग्भूषयति । सा का ? या संस्कृता व्याकरणादिसंस्कारयुक्ता विद्वद्भिर्धार्यते । वागतिरिक्तानि भूषणानि क्षीयन्ते खलु न तु वाग्भूषणं क्षीयते । अतो वाग्भूषणमेव सततं निरन्तरम्, अक्षयमिति यावत् । भूषणमलङ्करणं नान्यदिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

विद्यैव नरस्य रूपादिकमस्ति तद्रहितो नरः पशुरेवेत्याह—

**विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं**
**विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ॥**
**विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं[1]**
**विद्या राजसुपूजिता[2] न तु[3] धनं विद्याविहीनः पशुः ॥ २० ॥**

**विद्येति** ॥ 'नाम'इति संभावनायाम् । नरस्य पुरुषस्य विद्यैवाधिकं श्रेष्ठं रूपमस्ति । विद्यावन्तः कुरूपा अपि सर्वत्र मान्या भवन्ति, न तथा केवलं सुरूपाः । किंच प्रच्छन्नं स्वान्तःस्थितत्वेनेतरानपहार्यं, गुप्तं च बाह्यसाधनानपेक्षमननादिना रक्षितं च । प्रसिद्धधनं तु चोराद्यपहार्यं पेटकादिरक्षितं च । विद्या, भुज्यत इति भोगोऽन्नवस्त्रादिः तं करोतीति करी, संपादिकेति यावत् ।

---

**पाठा०**—१ देवता. २ राजसु पूजिता; राजसु पूज्यते. ३ हि.

तथा यशः कीर्तिः सुखमानन्दं च करोतीति यशःसुखकरी, तद्धेतुरित्यर्थः 'कृञो हेतुताच्छील्यानुलोम्येषु' (पा. ३।२।२०) इति टः। विद्यैव गुरूणामुपदेष्टॄणां गृणाति हितमुपदिशतीति गुरुरुपदेष्ट्री। विद्यैव विदेशगमने परदेशगमने बन्धुजनो बन्धुवद्धितकारी। परमुत्कृष्टं दैवतं विद्यैव। विद्यैव राज्ञा सुष्ठु पूजिता, धनं द्रविणं तु न। अतो विद्यया विहीनो रहितः पशुरेव। तदुक्तम्—'विहिताविहितविचारशून्यबुद्धेः श्रुतिविषयैर्विधिभिर्बहिष्कृतस्य। उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः?॥' इति। तस्मात्पुरुषेण पशुत्वव्यावृत्तये विद्यैवावश्यं संपादनीयेति तात्पर्यम्। पूर्वोक्तमेव वृत्तम्॥

क्षमादिगुणयुक्तस्यैतैर्वचनादिभिः किमित्याह—

**क्षान्तिश्चेद्वचनेन[1] किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां**
**ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्॥**
**किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदि**
**व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम्॥ २१॥**

**क्षान्तिश्चेदिति॥** क्षान्तिः क्षमा चेद्वचनेन जगन्मनोहारिभाषणेन किम्? यद्वा,—दुर्जनोक्तनिन्द्यभाषणेन किम्? क्षमयैव सर्वं जगत्प्रसन्नं भवतीत्यर्थः। देहिनां शरीरिणां क्रोधोऽस्ति चेदरिभिः शत्रुभिः किम्? इहलोकपरलोकभ्रंशनादि सर्वं शत्रुकर्म स एव करिष्यतीत्यर्थः। ज्ञातिः स्वजातिः संनिधावस्ति चेदनलेनाग्निना किम्? अग्निकृतं तापादिकं सैव करिष्यति। यदि सुहृत्सखा हितकर्ता चेद्दिव्यौषधैरुत्तमौषधैः फलं साध्यं किम्? यद्वा,—सुष्ठु सन्तुष्टं हृदन्तःकरणम्। 'स्वान्तं हृन्मानसं मनः' इत्यमरः। औषधैः शरीरहितं भवति तत्सुहृदा भवति। यदि दुर्जनाः खलाः सन्ति तर्हि सर्पैः किम्? दंशनं विनापि दुर्जनैः प्राणघातादिकरणे संभवति सति सर्पैः किं प्रयोजनमित्यर्थः। यदि अनवद्याऽनिन्द्या विद्या चेद्धनैर्द्रव्यैः किम्? धनेन यथा सुखं तथा विद्ययैव भवतीत्यर्थः। यदि व्रीडा लज्जा चेद्भूषणैर्बहिरलङ्कारैः किम्? तयैवालङ्करणकार्यं भवति। यदि सुष्ठु कीर्त्यादिवर्णनचतुरा कविता पद्यादिरचनाऽस्ति चेत्तर्हि राज्येन किम्? तयैव राज्यादिसुखं भवतीत्यर्थः। वृत्तं पूर्वोक्तमेव॥

---

पाठा०–१ °श्चेत् कवचेन किं.

उचितक्रियां कुर्वति जने न्यायमार्गस्थितिर्भवतीत्याह—

**दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने,**
**प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ॥**
**शौर्यं शत्रुजने, क्षमा गुरुजने, नारीजने धूर्तता,**
**ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ २२ ॥**

**दाक्षिण्यमिति** ॥ स्वजने पुत्रकलत्रादौ दाक्षिण्यमौदार्यं सारल्यम्, 'दक्षिणे सरलोदारौ' इत्यमरः । परजने स्वीयातिरिक्तजने दया कृपा, दुर्जने खलजने सदा शाठ्यं वञ्चकत्वम्, साधुजने प्रीतिः, नृपजने नयो नीतिः, विद्वज्जनेषु पण्डितेष्वार्जवमृजुता, शत्रुजने शौर्यं शूरत्वम्, गुरुजने महाजने क्षमा तत्कृतोपद्रवसहनम्, नारीजने स्त्रीजने धूर्तता धौर्त्यम्, एवंप्रकारेण ये पुरुषाः कलासु कुशला निपुणास्तेष्वेव लोकानां स्थितिर्न्याय-मार्गसंस्था । 'संस्था तु मर्यादाधारणा स्थितिः' इत्यमरः । सर्वे लोकास्त-दनुरोधेन वर्तन्त इत्यर्थः । पूर्वोक्तं वृत्तम् ॥

सत्संगतिर्जाड्यहरणादिकं सर्वं करोतीत्याह—

**जाड्यं धियो हरति सिञ्चति वाचि सत्यं**
**मानोन्नतिं दिशति पापमपाकरोति ॥**
**चेतः प्रसादयति दिक्षु तनोति कीर्तिं**
**सत्संगतिः कथय किं न करोति पुंसाम् ॥ २३ ॥**

**जाड्यमिति** ॥ सतां साधूनां संगतिः समागमः धियो बुद्धेर्जाड्यं मन्दतां हरति नाशयति, वाचि वाण्यां सत्यं सिञ्चति, यत्संगत्या लोकाः सत्यमेव वदन्तीत्यर्थः; मानस्य संमानस्योन्नतिमुच्चतां दिशति ददाति, पापमपाकरोति दूरीकरोति, चेतश्चित्तं प्रसादयति, अहङ्काराद्यपाकरणेन प्रसन्नतां नयती-त्यर्थः; दिक्षु दिशासु कीर्तिं तनोति विस्तारयति, एवं सत्संगतिः पुंसां किं किं न करोतीति कथय वद । किं तु सर्वानप्यर्थान्साधयतीत्यर्थः । वसन्ततिलका वृत्तम् । लक्षणं पूर्वमुक्तम् ॥

इदानीं कवीश्वरान्सर्वोत्कर्षत्वेन वर्णयति—

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ॥**
**नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २४ ॥**

---

**पाठा०**—१ जने. २ स्मयः खलजने. ३ °जने आर्जवम्. ४ जरामरणजन्मभीः.

जयन्तीति॥ रसेषु शृङ्गारादिषु, पक्षे–पारदादिषु, सिद्धाः सिद्धिमन्तः पूर्णाः, सज्जा इति यावत्। ते कवीश्वराः कवीन्द्राः सुकृतिनो धन्याः सन्तः। 'सुकृती पुण्यवान्धन्यः' इत्यमरः। जयन्ति सर्वोत्कर्षेण वर्तन्ते। ते के? येषां यशःकाये यशोरूपे देहे जरा च मरणं च ताभ्यां जातं भयं नास्ति। यथा सिद्धौषधरससेवनेन प्रसिद्धदेहो जरामरणभयरहितः सन्न नश्यति तथा कवीनां शृङ्गारादिरसपूर्णनानाविधकाव्यवचनजन्यं यशः कदापि न नश्यतीति भावः। अनुष्टुब् वृत्तम्॥

भगवत्कृपयैव पुत्रादयः सच्चरितादियुक्ता भवन्ति, नान्यथेत्याह—

**सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः**
**स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः॥**
**आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं**
**तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना॥ २५॥**

सूनुरिति॥ सूनुः पुत्रः सत् चरितमाचरणं यस्य। सत्क्रियावानित्यर्थः। अतिशयेन प्रिया प्रियतमा पत्नी सती पतिव्रता। 'सती साध्वी पतिव्रता' इत्यमरः। स्वामी पालकः प्रसादे प्रसन्नतायामूर्ध्वं मुखं यस्य। सर्वदा प्रसादकर्तेत्यर्थः। मित्रं सखा स्निग्धं वात्सल्यादिगुणयुक्तम्। परिजनः परिवारोऽवञ्चकः मनोऽन्तःकरणं विशेषेण गतो रागद्वेषादिजन्यक्लेशस्य लवो लेशो यस्मात्। आकारो हस्तपादाद्यवयवो मूर्तिर्वा रुचिरः सुन्दरः। विभव ऐश्वर्यं स्थिरश्चिरकालस्थायी। मुखमाननं विद्ययाऽवदातं शुद्धम्। 'अवदातः सिते पीते शुद्ध' इत्यमरः। इदं पूर्वोक्तं सर्वं विष्टपं जगद्धरत्युद्धरति तच्छीलस्तस्मिन्। ताच्छील्ये णिनिः। 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति मेदिनी। 'पिष्टप' इत्यपि पाठः। इष्टं ददातीतीष्टदो हरिस्तस्मिन् तुष्टे संतुष्टे सति देहिना शरीरिणा सम्यक्प्राप्यते। नान्यथेति भावः। शार्दूलविक्रीडितं वृत्तम्॥

प्राणिहिंसाद्यकरणमेव कल्याणमार्ग इत्याह—

**प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं**
**काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम्॥**
**तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा**
**सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः॥ २६॥**

**प्राणाघातादिति॥** प्राणस्य स्वस्यान्यस्य वाऽऽघातो हननं तस्मान्निवृत्तिर्नि-वर्तनं, परेषां धनस्य द्रव्यस्य हरणे संयमश्चित्तनिग्रहः, परधनहरणे प्रवृत्त्य-भाव इत्यर्थः। सत्यवाक्यं यथार्थभाषणं, काले पुण्यकाले शक्त्या यथाशक्त्या प्रदानं ब्राह्मणादिभ्यो दानं, परेषामन्येषां युवतिजनस्य तरुणीजनस्य कथासु मूकभावस्तूष्णींभावः। वाचा परस्त्रीकथानुद्घाटनमित्यर्थः। तृष्णाया आशायाः स्रोतः प्रवाहस्तस्य विभङ्गो नाशः। गुरुषु महाजनेषु विनयो नम्रता, सर्व-भूतेषु सर्वप्राणिष्वनुकम्पा दया च, एषः सर्वशास्त्रेषु अनुपहतोऽकुण्ठितः। अप्रतिषिद्ध इति यावत्। विधिर्विधानं यस्यैतादृशः सामान्यः सर्वलोकसाधा-रणः श्रेयसां कल्याणानां पन्था मार्गो नान्य इत्यर्थः। स्रग्धरा वृत्तम्। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति तल्लक्षणात्॥

नीचमध्यमोत्तमानां क्रियारम्भे वैचित्र्यमाह—

**प्रारभ्यते न खलु विघ्नभयेन नीचैः**
**प्रारभ्य विघ्नविहता विरमन्ति मध्याः॥**
**विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः**
**प्रारब्धमुत्तमजना न परित्यजन्ति॥ २७॥**

**प्रारभ्यत** इति॥ नीचैरज्ञैर्विघ्नस्यान्तरायस्य, 'विघ्नोऽन्तरायः प्रत्यूहः' इत्य-मरः। भयं भीतिस्तेन, कर्म न प्रारभ्यते खलु निश्चयेन। मध्या मध्यमाः प्रारभ्य प्रारम्भं कृत्वा विघ्नेन विहताश्चालिताः सन्तो विरमन्ति विरामं प्राप्नुवन्ति, कर्म न कुर्वन्तीत्यर्थः; उत्तमजनास्तु विघ्नैः पुनःपुनर्वारंवारं प्रतिहन्यमानाश्चाल्य-माना अपि प्रारब्धं स्वारब्धं कार्यं न परित्यजन्ति। समये समये विघ्ने प्राप्तेऽपि तन्निवृत्त्युपायं कुर्वन्ति, नारब्धं त्यजन्तीत्यर्थः। वसन्ततिलका वृत्तम्॥

साधुवदेव वर्तितव्यं नासाधुवदिति बोधयितुं साध्वाचारप्रशंसामाह—

**असन्तो नाभ्यर्थ्याः, सुहृदपि न याच्यः कृशधनः,**
**प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम्॥**
**विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां,**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्॥ २८॥**

---

पाठा०–१ प्रारभ्य तूत्तमजना.

**असन्त** इति ॥ असन्तो दुर्जनाः, अभ्यर्थितुं याचितुं योग्या अभ्यर्थ्या न। कृशं क्षीणं धनं यस्य स सुहृदपि न याच्यो न प्रार्थनीयः । प्रिया हिता न्यायादनपेता अरहिता न्याय्या वृत्तिर्जीविका, मलिनं निन्द्यं कर्म असोः प्राणस्य भङ्गो नाशस्तस्मिन्नप्यसुकरं दुष्करम् । प्राणभङ्गसमयेऽपि निन्द्यं कर्म नाचरणीयमित्यर्थः । विपदि विपत्काले उच्चैरुन्नतं स्थेयम् । स्वविपत् अप्रकटनीयेत्यर्थः । महतां पदं स्थानमनुविधेयमनुसरणीयम् । इदं पूर्वोक्तं षड्रूपं विषममतिकठिनं असिधारेव खड्गधारेव तीक्ष्णतरं व्रतमाचरणं सतां केनोद्दिष्टमुपदिष्टं न केनापि, अपि तु तेषां स्वभावसिद्धमित्यर्थः । शिखरिणी वृत्तम् ॥

अतिदुःखमापन्नोऽपि मानी महाजनः स्वमहत्त्वविरुद्धं नीचं कर्म न करोतीति सिंहान्योक्त्याह—

**क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि[1] कष्टां दशा-**
**मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु गच्छत्स्वपि[2] ॥**
**मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः**
**किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २९ ॥**

**क्षुत्क्षामोऽपीति** ॥ क्षुधा क्षुधया क्षामो दुर्बलोऽपि जरया कृशोऽपि शिथिलः शैथिल्यं प्राप्तः प्राणः शक्तिर्यस्य । 'शक्तिः पराक्रमः प्राणः' इत्यमरः । कष्टां दशामापन्नः प्राप्तोऽपि विपन्ना नष्टा दीधितिर्दीप्तिर्यस्य सोऽपि प्राणेषु गच्छत्स्वपि निष्क्रमणोन्मुखेषु सत्स्वपि मत्ता मदोन्मत्ताश्च ते इभेन्द्रा गजेन्द्रास्तेषां विभिन्ना विदारिता ये कुम्भा गण्डस्थलानि तत्संबन्धी यः कवलो मांसपिण्डस्तस्य ग्रासो ग्रसनम् । भक्षणमिति यावत् । तस्मिन्नेव बद्धैका मुख्या स्पृहा वाञ्छा येन एतादृशो माने महान्तस्तेषामग्रेसरः केसरी सिंहो जीर्णं विरसं तृणमत्ति खादति किम् । अपि तु नेत्यर्थः । मानी सिंहः स्वभक्षणीयं मांसं विहाय प्राणान्तसमयेऽपि यथा जीर्णतृणादनरूपं नीचं कर्म न करोति तथा मानिभिर्महद्भिरपि प्राणान्तसमयेऽपि नीचं कर्म न कर्तव्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

मानी जनः पूर्वोक्तप्रकारेणाचरन्नपि स्वसत्त्वानुरूपं फलं प्राप्नोतीति श्वसिंहदृष्टान्तेनाह—

---

**पाठा०**–१ शिथिलप्रायोऽपि. २ नश्यत्स्वपि.

स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये ॥
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं,
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ ३० ॥

स्वल्पमिति ॥ स्नायुरङ्गप्रत्यङ्गसन्धिबन्धनशिराविशेषः, वसा मेदश्च ताभ्यामवशेषमवशिष्टमत एव मलिनं निर्मांसं मांसरहितमपि स्वल्पं गोर्वृषभस्यास्थि लब्ध्वा श्वा कुक्कुरो यद्यपि परितोषं संतोषमेति प्राप्नोति परंतु तदस्थि तस्य शुनः क्षुधायाः शान्तये निवृत्त्यर्थं न भवति । सिंहस्तु अङ्कमुत्सङ्गमागतमपि जम्बुकं शृगालम् 'शृगालजम्बुकक्रोष्टु' इत्यमरः । तुच्छत्वबुद्ध्या त्यक्त्वा द्विपं गजमेव निहन्ति । कृच्छ्रं दुःखं गतोऽपि सर्वो जनः सत्त्वस्य स्वस्वभावस्यानुरूपमनुकूलं फलं वाञ्छति इच्छत्येव । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति मेदिनी । पूर्वोक्तमेव वृत्तम् ॥

क्षुद्रजनस्य तुच्छत्वं महाजनस्य धीरत्वं श्वगजदृष्टान्तेन दर्शयन्नाह—

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ॥
श्वा पिण्डदस्य कुरुते, गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ३१ ॥

लाङ्गूलेति ॥ श्वा कुक्कुरः पिण्डं ग्रासं ददातीति पिण्डदस्तस्य पुरतः पिण्डलोभेन लाङ्गूलस्य पुच्छस्य चालनं तथा अधोऽधोभागे चरणयोः पादयोरवपातः पातनं तथा भूमौ पृथिव्यां निपत्य पतित्वा वदनं चलज्जिह्वमुखं स्वोदरं च तयोर्दर्शनं कुरुते । गजपुङ्गवो गजश्रेष्ठस्तु धीरं गभीरं यथा स्यात्तथा विलोकयत्यवलोकयति, चाटुशतैः प्रियवाक्यशतैः प्रार्थितः सन् भुङ्क्ते । एवं क्षुद्रजनः श्ववल्लोभेन मुखचालनादि करोति, महाजनस्तु गाम्भीर्येण पश्यन्नत्यादरेण प्रियवचनश्लाघितः सन् भुङ्क्ते इति भावः । वसन्ततिलका वृत्तम् ॥

वंशोन्नतिकारक एव पुरुषो गरीयान्नान्य इत्याह—

परिवर्तिनि संसारे मृतः को वा न जायते ॥
स जातो येन जातेन याति वंशः समुन्नतिम् ॥ ३२ ॥

---

पाठा०—१ स्वल्पस्नायुवसा°. २ °मप्यस्थिकं. ३ न च तत्तस्य.

**परिवर्तिनीति** ॥ परिवर्तिन्यागमापायवति संसारे को न जायते ? जातः को वा न मृतः ? परंतु येन जातेनोत्पन्नेन वंशः कुलं समुन्नतिमुत्कर्षं याति प्राप्नोति स जातः, अन्यो जातोऽप्यजातप्राय इत्यर्थः । अनुष्टुब् वृत्तम् ॥

महतां द्विधा वर्तनं पुष्पस्तबकदृष्टान्तेनाह—

**कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ॥**
**मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ३३ ॥**

**कुसुमेति** ॥ कुसुमानां पुष्पाणां स्तबको गुच्छः, समूह इति यावत् ; तस्येव प्रशस्तं मनोऽस्यास्तीति तस्य विचारवतः पुरुषस्य, द्वाववयवौ यस्याः सा द्वयी द्विप्रकारिका, 'सङ्ख्याया अवयवे तयप्' (पा. ५।४।४२) 'द्वित्रिभ्यां तयस्यायज्वा' (पा. ५।२।४३) इत्ययच्, 'टिड्ढा–' (पा. ४।१।१५) इति ङीप्। वृत्तिर्वर्तनं स्थितिरित्यर्थः । द्विप्रकारत्वं च श्रद्धालौ श्रोतरि सति हितोपदेशकरणमेकम् ; तदभावे तूष्णींभावेन स्थितिर्द्वितीयम् । कथम् ? यथा सति ग्रहीतरि कुसुमस्तबकेन सर्वलोकस्य मूर्ध्नि मस्तकेऽवशीर्यते, अथवा ग्रहीतरि असति वने विशीर्यते नश्यति, तथा मनस्विनः श्रोतरि सति हितोपदेशकरणेन पूज्या भवन्ति, अन्यथा तूष्णींभावेनावतिष्ठन्त इति भावः । अयमेव श्लोकः पाठभेदेन चतुरधिकशतश्लोके दृश्यते, अर्थतात्पर्यं त्वेकमेव, परंतु बहुपुस्तकेषु दृष्टत्वात्तथैव स्थापितो न तु निष्कासितः । अनुष्टुब् वृत्तम् ॥

दुर्जनः स्वपराक्रमख्यापनार्थमतितेजस्विनं पुरुषं पीडयति, नाल्पतेजसमिति राहुदृष्टान्तेनाह—

**सन्त्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषा-**
**स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ॥**
**द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ**
**भ्रान्तः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः[1] ॥ ३४ ॥**

**सन्त्यन्य इति** ॥ बृहस्पतिर्गुरुः प्रभृतिर्मुख्यो येषां ते, पञ्च वा षड्वा पञ्चषाः, 'संख्ययाव्ययासन्ना' (पा. २।२।२५) इति बहुव्रीहिः, 'बहुव्रीहौ संख्येये' (पा. ५।४।७३) इति समासान्तो डच्। अन्येऽपि संभाविता मान्या ग्रहाः सन्ति, परंतु शीर्षमेव मस्तकमेवावशेषः कृतो यस्य स शीर्षावशेषीकृतो दानवपतिरेष

---

पाठा०–१ शीर्षावशेषाकृतिः.

राहुर्यतो विशेषोऽधिको यो विक्रमः पराक्रमस्तस्मिन् रुचिः प्रीतिर्यस्य तथाभूतो-ऽतस्तान् प्रति न वैरायते वैरं न कुरुते । 'शब्दवैरकलह–' (पा. ३।१।१७) इति क्यङ्; किंतु भ्रान्तो भ्रमणं कुर्वन्, 'गत्यर्थ–' (पा. ३।४।७२) इत्यादिना कर्तरि क्तः । भास्वरौ दीप्तिमन्तौ द्वौ–दिनस्य दिवसस्येश्वरः सूर्यः, निशाया रात्र्याः प्राणेश्वरश्चन्द्रः, तावेव पर्वणि पूर्णिमायाममावास्यायां च ग्रसते भक्षयते, पीडयतीति यावत् । 'पश्य' इति जनं प्रति संबोधयति । यथाऽन्यान् ग्रहान्विहाय राहुरतितेजस्विनौ सूर्याचन्द्रमसौ पीडयति, तथा दुर्जनोऽप्यल्पं जनं विहाय स्व-पराक्रमख्यापनार्थं तेजस्विनं पुरुषं पीडयतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

महतां चरित्रं निर्मर्यादमस्तीत्याह—

**वहति भुवनश्रेणीं शेषः फणाफलकस्थितां**
**कमठपतिना मध्येपृष्ठं सदा स च धार्यते ॥**
**तमपि कुरुते क्रोडाधीनं पयोधिरनादरात्,**
**अहह महतां निःसीमानश्चरित्रविभूतयः ॥ ३५ ॥**

वहतीति ॥ शेषः सहस्रशीर्षोऽनन्तः फणानां फटानां फलकं पट्टिका तस्यां स्थिता ताम्, भुवनस्य जगतः श्रेणीं पङ्क्तिं वहति धारयति । स शेषश्च कमठपतिना कूर्मरूपेण भगवता मध्येपृष्ठं, पृष्ठस्य मध्ये इत्यर्थः; सदा सर्वकालं धार्यते । तमपि कमठपतिं पयोधिः समुद्रः अनादरादनायासेन क्रोडमुत्सङ्गः, 'क्रोडमङ्कस्तथोत्सङ्गः' इति हलायुधः । तस्याधीनं स्वाधीनं कुरुते, अभ्यन्तरे धारयतीत्यर्थः । 'अहह' इत्याश्चर्ये । महतां चरित्रस्य विभूतय ऐश्वर्याणि निःसीमानो निरवधयः सन्तीति । अनेन महतां चरित्रं न कोऽपि सम्यगाकलयितुं शक्त इति व्यज्यते । हरिणी वृत्तम् । लक्षणं तूक्तमेव ॥

क्लेशयुक्तं पितरं विहायान्यत्र स्वप्राणरक्षाकरणं नोचितमित्याह—

**वरं पक्षच्छेदः[1] समदमघवन्मुक्तकुलिश-**
**प्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः ॥**
**तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे**
**न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ ३६ ॥**

---

पाठा०–१ प्राणच्छेदः°. २ °द्वहल°.

**वरमिति॥** पितरि हिमाद्रौ क्लेशस्य दुःखस्य विवशेऽधीने सति पयसां पत्युः समुद्रस्य पयसि जले तुषाराद्रेर्हिमालयस्य सूनोर्मैनाकस्यासौ संपातः पतनं नोचितो न योग्यो भवति, किंतु उद्गच्छद्दहनो भयानको दहनोऽग्निस्तस्योद्गार उद्गिरणं तेन गुरुभिः, 'रुचिभिः' इति पाठे रुचिः कान्तिर्येषां तैरित्यर्थः। मदेन सहितः समदो यो मघवानिन्द्रस्तेन मुक्तं त्यक्तं कुलिशं वज्रं तस्य प्रहारैः पक्षाणां छेदश्छेदनं वरं श्रेष्ठो भवतीति। अनेन स्वस्य आपत्प्राप्तावप्यापद्गतस्य पितुस्त्यागो नोचित इति ध्वन्यते। शिखरिणी वृत्तम्। लक्षणं पूर्वमुक्तमेव॥

तेजस्वी चेतनः पुरुषः परकृततिरस्कारं न सहत इति सूर्यकान्तमणिदृष्टान्तेनाह—

**यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः।**
**तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते?॥ ३७॥**

**यदचेतनोऽपीति॥** यद्यस्मादचेतनोऽपि चेतनारहितोऽपि इनकान्तः सूर्यकान्तमणिः सवितुः सूर्यस्य पादैः किरणैः; पक्षे—चरणैः, स्पृष्टः सन् प्रज्वलति प्रदीप्तो भवति, तत्तस्मात्तेजस्वी पुरुषः परेण कृता या निकृतिर्धिक्कारस्तां कथं सहते? न सहत इत्यर्थः। आर्या वृत्तम्। लक्षणं तूक्तमेव॥

पराक्रमोद्दीपकस्य तेजसो हेतुर्वयो न, किंतु स्वभाव एवेति सिंहशिशुदृष्टान्तेनाह—

**सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु॥**
**प्रकृतिरियं सत्त्ववतां, न खलु वयस्तेजसो हेतुः॥ ३८॥**

**सिंह इति॥** शिशुरपि बालोऽपि सिंहः प्रशस्ताः कपोलाः कपोलभित्तयः 'प्रशंसावचनैश्च' (पा. २।१।६६) इति समासः। 'भित्ति'शब्दः प्रशस्तवचनः। तदुक्तं गणरत्नमहोदधौ 'मतल्लिकोद्घमिश्राः स्युः प्रकाण्डस्थलभित्तयः' इति। यद्वा,—प्रदेशवाचकः, 'भित्तिः प्रदेशे कुड्ये च' इति विश्वः। मदेन गजमदेन मलिनाः कपोलभित्तयः प्रशस्तकपोलाः कपोलप्रदेशा वा येषां तेषु गजेषु निपतति वधाय चलति, इयं सत्त्ववतां बलवतां प्रकृतिः स्वभाव एव। वयोवस्था तेजसो हेतुर्न खलु निश्चयेन। आर्या वृत्तम्॥

द्रव्यं विना सर्वे गुणास्तृणवत्तुच्छप्राया इत्याह—

**जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतां**
**शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना ॥**
**शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं**
**येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ३९ ॥**

**जातिरिति** ॥ जातिर्ब्राह्मणादिस्वजाती रसातलं यातु गच्छतु । गुणानां गणः समूहस्तस्य रसातलस्याप्यधोऽधोभागे गच्छताम्; शीलं सद्वृत्तम् । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । शैलस्य पर्वतस्य तटात्पततु; अभिजनो वंशः, 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः । वह्निनाऽग्निना संदह्यतां भस्मीक्रियताम्; 'दह भस्मीकरणे' इति धातुः । शौर्ये शूरत्वरूपे वैरिणि शत्रौ वज्रं कुलिशमाशु शीघ्रं निपततु; एवं सर्वस्य हानिर्भवतु, परंतु नोऽस्माकं केवलमर्थो धनमस्तु । एकेन मुख्येन येन द्रव्येण विना इमे पूर्वोक्ताः समस्ता गुणास्तृणस्य लवो लेशस्तत्प्रायास्तत्संदृशा अतितुच्छा भवन्ति । शार्दूलविक्रीडितं वृत्तम् ॥

अन्वय-व्यतिरेकाभ्यामर्थस्य सर्वापेक्षया श्रेष्ठत्वमाह द्वाभ्याम्—

**तानीन्द्रियाणि सकलानि तदेव कर्म सा बुद्धिरप्रतिहता वचनं तदेव ॥**
**अर्थोष्मणा विरहितः पुरुषः स एव त्वन्यः क्षणेन भवतीति विचित्रमेतत् ४०**

**तानीति** ॥ सकलानीन्द्रियाणि वागादीनि तान्येव पूर्वसिद्धान्येव, एवमग्रेऽपि; कर्म क्रिया तदेव, अप्रतिहताऽकुण्ठिता बुद्धिः सैव, वचनं वाक्यं तदेव, पुरुषः स एव, किन्तु अर्थस्य द्रव्यस्योष्मा तेन विरहितः सन् क्षणेन क्षणमात्रेणान्य इव भवतीति । एतत् विचित्रमाश्चर्यम् । एकेनार्थेन विना सर्वाणीन्द्रियादीनि व्यर्थानि भवन्ति । तस्मात्पुरुषेणार्थोऽवश्यं संपादनीय इति भावः । अनेन व्यतिरेको दर्शितः । वसन्ततिलका वृत्तम् ॥

किंच अन्वयमाह—

**यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ॥**
**स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ति ॥४१॥**

**यस्येति** ॥ यस्य नरस्य वित्तं द्रव्यमस्ति स एव नरः कुलीनः सत्कुलोत्पन्नः, स एव पण्डितः बुद्धिमान्, स एव श्रुतवान् शास्त्रज्ञः, 'श्रुतमाकर्णिते शास्त्रे

इति मेदिनी। स एव गुणं जानातीति गुणज्ञः गुणवेत्ता, स एव वक्ता वाग्मी, स च दर्शनीयो दर्शनयोग्यः, रूपवानिति यावत्; सर्वे पूर्वोक्ता गुणाः काञ्चनं सुवर्णमेवाश्रयन्ति। इदं सर्वेषां धनानामुपलक्षणम्। धनसत्त्वे एव सर्वे गुणाः प्रकाशन्त इत्यर्थः। उपजातिर्वृत्तम्। 'स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति॥

राजादयो दौर्मन्त्र्यादिभिर्नश्यन्तीत्याह—

**दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-**
**द्विप्रोऽनध्ययनात् कुलं कुतनयाच्छीलं खलोपासनात्॥**
**ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-**
**न्मैत्री चाप्रणयात् समृद्धिरनयात्त्यागात्प्रमादाद्धनम्॥ ४२॥**

**दौर्मन्त्र्यादिति**॥ नृपती राजा दुर्मन्त्रिणो भावो दौर्मन्त्र्यं तस्मात्, दुर्मन्त्र-सेवनादित्यर्थः। नश्यति स्वराज्याद्भ्रष्टो भवति। यतिः संन्यासी सङ्गात्स्त्र्यादि-सङ्गात् नश्यति। एवमुत्तरत्रापि नश्यतीति संबध्यते। सुतः पुत्रो लालना-च्छिक्षाद्यकरणादित्यर्थः। विप्रो ब्राह्मणोऽनध्ययनात्स्वाध्यायापठनात्, कुलं प्रतिष्ठितवंशः कुतनयात्कुमार्गगामिनः पुत्रात्, शीलं सद्वृत्तम्, 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। खलस्य दुर्जनस्योपासनं तस्मात्, ह्रीर्लज्जा मद्यान्मदिरायाः, कृषिः प्रसिद्धा, अनवेक्षणाद्वारंवारमनवलोकनात्, स्नेहः प्रेम प्रवासाश्रयादन्यत्र बहुदिवसवासात्, मैत्री मित्रत्वमप्रणयादविनयात्, समृद्धिरैश्वर्यमनयादनीतेः, धनं त्यागादपात्रेषु दानात्प्रमादादनवधानान्नश्यतीति। अनेन राजादिभिर्दुर्म-न्त्र्यादिसेवनं न कार्यमिति ध्वन्यते। शार्दूलविक्रीडितं वृत्तम्॥

दान-भोगाभ्यां विहीनस्य धनस्य सर्वथा नाशो भवतीत्याह—

**दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य॥**
**यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥ ४३॥**

**दान**मिति॥ दानं सत्पात्रेषु, भोगः स्वाश्रितैः सह, नाशश्चोरादिभ्यः, एता-स्तिस्रो वित्तस्य द्रव्यस्य गतयो भवन्ति। तत्र प्रकारत्रैविध्यमाह—यः पुरुषः सत्पात्रेभ्यो न ददाति स्वयं च न भुङ्क्ते उपभोगं न कुरुते तस्य पुरुषस्य

द्रव्यस्य तृतीया गतिर्नाम नाशो भवतीत्यर्थः। तस्मात्सति धने पुरुषेण नांश-भयाद्दानभोगाववश्यं कर्तव्याविति व्यज्यते। आर्या वृत्तम्॥

याचकेषु बहुदानं कुर्वन्संपदा क्षीणोऽपि जनो विशेषेण शोभत इति मण्यादिदृष्टान्तोपन्यासपूर्वकमाह—

**मणिः शाणोल्लीढः, समरविजयी हेतिनिहतो,**
**मदक्षीणो नागः, शरदि सरितः श्यानपुलिनाः॥**
**कलाशेषश्चन्द्रः, सुरतमृदिता बालवनिता**
**तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः[1]॥ ४४॥**

**मणिरिति**॥ शाणो घर्षणप्रस्तरस्तत्रोल्लीढो घर्षितः, कृशीकृत इति यावत्। मणिर्हीरकादिः, हेतिना खड्गादिना निहतः कृतक्षतः समरविजयी सङ्ग्रामे जयशीलो योद्धा, मदेन गजमदेन क्षीणो नागो हस्ती, शरदि शरत्काले श्यानानि संकुचितानि, शुष्काणीति यावत्। पुलिनानि वालुकामयप्रदेशा यासु ताः सरितो नद्यः, कलया षोडशभागेन शेषोऽवशिष्टश्चन्द्रः। सुरते पुरुषेण मृदिता आलिङ्गनचुम्बनादिनोपमर्दिताङ्गी बालवनिता नवयौवना स्त्री एवमर्थिषु याचकेषु गलितः संक्रामितो विभव ऐश्वर्यं यैस्ते एवंविधा नराः। 'नृपाः' इत्यपि पाठः। तनिम्ना कार्श्येन, क्षीणत्वेनेति यावत्। शोभन्ते अनेन धनाढ्यैः पुरुषैर्दानमवश्यं कर्तव्यमिति बोधितमिति भावः। शिखरिणी वृत्तम्॥

वस्तुनो लघुत्व-महत्त्वहेतुरवस्थैव, नान्यदित्याह—

**परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये**
**स पश्चात्संपूर्णो गणयति धरित्रीं तृणसमाम्॥**
**अतश्चानैकान्त्याद्गुरुलघुतयाऽर्थेषु[2] धनिना-**
**मवस्था वस्तूनि प्रथयति च संकोचयति च॥ ४५॥**

**परिक्षीण** इति॥ कश्चिदेकः पुरुषः परिक्षीणो दरिद्रः सन् यवानां प्रसृतये अर्धाञ्जलिपरिमितधान्यार्थं स्पृहयति स्पृहां करोति, दरिद्रावस्थायां तामेव यवप्रसृतिं महतीं मन्यत इत्यर्थः; स एव पश्चादनन्तरं धनादिभिः संपूर्णः परिपूर्णः सन् धरित्रीं पृथ्वीं तृणसमां तृणवत् गणयति गणनां करोति, धनिकावस्थायां पृथ्वीमपि तुच्छां मन्यत इत्यर्थः। अतो हेतोः अवस्थैव गुरुलघु-

---

**पाठा०**—१ जनाः. २ अतश्चानेकान्ता गुरु°.

तया गुरुत्वेन लघुत्वेन च वस्तूनि प्रथयति विस्तारयति संकोचयति च। ननु अर्थेषु स्वरूपतो गुरुत्वं लघुत्वं चास्ति, किमवस्थयेत्याशङ्क्याह—**धनिनामिति**। धनिनामर्थेषु विषये अनैकान्त्यात् स्वरूपतो गुरुत्व-लघुत्वयोः परस्परव्यभिचारात्। यश्च स्वरूपतो लघुः स दरिद्रावस्थायां गुरुर्भवति; यश्च स्वरूपतो गुरुः स धनिकावस्थायां लघुर्भवति, अतोऽवस्थैव गुरुलघुत्वकारिणीति भावः। शिखरिणी वृत्तम् ॥

राज्ञां पृथ्वीपालनप्रकारं बोधयति—

**राजन्! दुधुक्षसि यदि क्षितिधेनुमेनां**
**तेनाद्य वत्समिव लोकममुं पुषाण ॥**
**तस्मिंश्च सम्यगनिशं परिपोष्यमाणे**
**नानाफलैः फलति कल्पलतेव भूमिः ॥ ४६ ॥**

**राजन्निति** ॥ हे राजन्! यदि एनां क्षितिः पृथ्वी तद्रूपां धेनुं दुधुक्षसि दोग्धुमिच्छसि तर्हि तेन दोहनेन यद्वा,-तेन दुधुक्षाया हेतुनाऽद्य वत्समिवामुं लोकं पुषाण पोषय। तस्मिंश्च लोके अनिशं निरन्तरं सम्यक् उत्तमप्रकारेण परिपोष्यमाणे सति नानाफलैः सस्यादिभिः कल्पलतेव भूमिः फलति फलं ददति। अनेन पृथ्वीदोहनपूर्वकं प्रजापालनमेव राज्ञा कर्तव्यमिति तं प्रति नीतिर्बोधितेति। वसन्ततिलका वृत्तम् ॥

राजनीतिर्नैकविधा, किंत्वनेकविधाऽस्तीति वेश्यादृष्टान्तेन वर्णयति—

**सत्यानृता च परुषा प्रियवादिनी च**
**हिंस्रा दयालुरपि चार्थपरा वदान्या ॥**
**नित्यव्यया प्रचुरनित्यधनागमा च**
**वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ४७ ॥**

**सत्येति** ॥ क्वचित् सत्या सत्यमिश्रा। 'क्वचित्' इति सर्वत्र योजनीयम्। अनृता असत्यमिश्रा, परुषा निष्ठुरा, 'निष्ठुरं परुषं ग्राम्यम्' इत्यमरः। प्रियवादोऽस्यामस्तीति प्रियवादिनी, प्रियभाषणयुक्तेत्यर्थः। हिंस्रा घातुका, 'शरारुर्घातुको हिंस्रः' इत्यमरः। दयालुर्दयाशीला, अर्थपरा धनतत्परा, वदान्या दानशौण्डा, 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः। नित्यं व्ययो धनापगमो यस्याम्। प्रचुरोऽधिको नित्यं धनागमो धनप्राप्तिर्यस्याम्। वारा-

ङ्गनेव पण्यस्त्रीव नृपनीतिः राजनीतिरनेकरूपाऽनेकप्रकारा अस्ति। प्रतिक्षणे सत्यानृतभाषणादियुक्ता यथा वेश्याऽनेकप्रकारा तथा राजनीतिरप्यनेकप्रकारेति भावः। पूर्वोक्तमेव वृत्तम्॥

आज्ञादिषड्गुणा राजपुरुषेऽपेक्षितास्तद्विना तेषां राजाश्रयो व्यर्थ इत्याह—

**आज्ञा कीर्तिः पालनं ब्राह्मणानां**
**दानं भोगो मित्रसंरक्षणं च॥**
**येषामेते षड्गुणा न प्रवृत्ताः**
**कोऽर्थस्तेषां पार्थिवोपाश्रयेण?॥ ४८॥**

आज्ञेति॥ दुर्जनानां आज्ञा शासनम्। 'निदेशः शासनं च सः। शिष्टिश्चाज्ञा' इत्यमरः। कीर्तिर्यशः सर्वदिक्षु, ब्राह्मणानां पालनं रक्षणं, दानं सत्पात्रेभ्यः, भोगः स्रक्ताम्बूलादेः स्वस्मिन्, आपद्भ्यो मित्राणां संरक्षणं च एते पूर्वोक्ताः षड्गुणा येषां न प्रवृत्ता न प्राप्ताः तेषां पार्थिवस्य राज्ञ उपाश्रयेणाश्रयेण कोऽर्थः किं प्रयोजनम्? न किमपीत्यर्थः। शालिनी वृत्तम्॥ 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति तल्लक्षणात्॥

स्वप्रारब्धलिखितमर्थं पुरुषा लभन्ते नाधिकमिति घटदृष्टान्तेनाह—

**यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं**
**तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकम्॥**
**तद्धीरो भव, वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः,**
**कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम्॥ ४९॥**

यद्धात्रेति॥ धात्रा ब्रह्मणा निजभालपट्टे स्वकपाले लिखितं स्तोकं लघु महद्बहु वा यद्धनं तन्मरुस्थलेऽपि निर्जलदेशेऽपि प्राप्नोति। अतो लिखितादधिकं मेरौ काञ्चनगिरावपि न प्राप्नोति। तत्तस्मात् धीरो भव धैर्यमालम्ब्य तिष्ठ। वित्तवत्सु धनिषु कृपणां दीनां वृत्तिं जीविकां वृथा व्यर्थं मा कृथा मा कुरु। हे जन! त्वं पश्य, घटः कूपे स्वल्पोदके पयोनिधावगाधे वा तुल्यं स्वप्रमाणानुरूपं जलं गृह्णाति, नाधिकमित्यर्थः। धनेच्छुना पुरुषेण लाभस्य प्रारब्धाधीनत्वाद्धनिषु कृपणया वृत्त्या न वर्तितव्यमिति तात्पर्यम्। शार्दूलविक्रीडितं वृत्तम्॥

स्वाश्रिते जने तद्दैन्योक्तिप्रतीक्षा न कर्तव्येति मेघान्योक्त्या दर्शयति—

**त्वमेव चातकाधारोऽसीति केषां न गोचरः॥**
**किमम्भोदवरास्माकं कार्पण्योक्तिः प्रतीक्ष्यते?॥ ५०॥**

**त्वमेवेति** ॥ हे अम्भोदवर हे मेघश्रेष्ठ ! त्वया अस्माकं चातकानां कार्पण्योक्तिर्दैन्योक्तिः किं प्रतीक्ष्यते 'इमे दीना भूत्वा यदा मां प्रार्थयिष्यन्ति तदाऽहं वृष्टिं करोमि' इति किमिच्छसि ? यतस्त्वमेव चातकानां पक्षिविशेषाणामाधार आश्रयोऽसीति केषां गोचरः प्रत्यक्षं न ? किंतु सर्वेषामस्तीति । तस्मात्त्वाश्रितजनदैन्योक्तिप्रतीक्षाकरणमनुचितमिति भावः । अनुष्टुब् वृत्तम् ॥

पुरुषेण कस्यापि पुरतो दीनवचनं न वक्तव्यमिति चातकान्योक्त्या दर्शयति—

**रे रे चातक सावधानमनसा मित्र ! क्षणं श्रूयता-**
**मम्भोदा बहवो हि सन्ति गगने सर्वेऽपि नैतादृशाः ॥**
**केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा**
**यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ ५१ ॥**

**रे रे चातकेति** ॥ 'रे रे' इति वीप्सा नीचसंबोधने । हे चातक ! हे मित्र ! सावधानमनसा अव्यग्रचित्तेन क्षणं क्षणमात्रं श्रूयताम् । हि यस्माद्गगने अम्भो जलं ददतीत्यम्भोदा मेघा बहवः सन्ति, परंतु सर्वेऽप्येतादृशाः करुणावन्तो न । कुतः ? केचिद्वृष्टिभिर्वर्षणैर्वसुधां पृथ्वीमार्द्रयन्ति जलयुक्तां कुर्वन्ति । केचिद्वृथा व्यर्थं गर्जन्ति गर्जनां कुर्वन्ति, न वर्षन्तीत्यर्थः । तस्माद्यं यं मेघं पश्यसि तस्य तस्य पुरतोऽग्रे दीनं वचो वाक्यं मा ब्रूहि मा वद । अनेन ये दानशीलास्तान्प्रति याचना कर्तव्या, नेतरान्प्रतीति सूचितमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

दुर्जनस्य स्वभावसिद्धलक्षणमाह—

**अकरुणत्वमकारणविग्रहः पर[1]धने परयोषिति च स्पृहा ॥**
**स्वजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥५२॥**

**अकरुणेति** ॥ सर्वप्राणिषु अकरुणत्वं निर्दयत्वम् । अकारणविग्रहः कारणं विना वैरम् । परस्य धने द्रव्ये तथा परस्य योषिति स्त्रियां स्पृहेच्छा । स्वजनाः बन्धुजनाश्च तेषु सहिष्णोर्भावः सहिष्णुता, न सहिष्णुता असहिष्णुता असहनशीलता । दुरात्मनां दुर्जनानामिदं पूर्वोक्तं दोषचतुष्टयं प्रकृत्या स्वभावेन सिद्धम्, नान्यतः प्राप्तमित्यर्थः । द्रुतविलम्बितं वृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणात् ॥

---

**पाठा०**—१ परधनापहृतिः परयोषितश्च.

विद्यालङ्कृतस्यापि दुर्जनस्य सङ्गो न कर्तव्य इति सर्पदृष्टान्तेनाह—

**दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन् ॥**
**मणिना भूषितः सर्पः किमसौ न भयंकरः ? ॥ ५३ ॥**

दुर्जन इति ॥ दुर्जनोऽसज्जनो विद्ययाऽलङ्कृतोऽपि सन् परिहर्तुं त्यक्तुं योग्यः परिहर्तव्योऽस्ति, न सहवासयोग्य इत्यर्थः । तत्र दृष्टान्तः—असौ प्रसिद्धः सर्पः मणिना भूषितोऽपि भयं करोतीति भयंकरः 'मेघर्तिभयेषु कृञः' (पा. ३।२।४३) इति खच्, 'अरुर्द्विषद्—' (पा. ६।३।६७) इति मुम् । न किम् ? अपि तु भयंकर एव । मणिना भूषितोऽपि सर्पो यथा भयंकरस्तथा विद्वानपि दुर्जनः, अतस्तस्य सङ्गः सर्वथा न कर्तव्य इति भावः । अनुष्टुब् वृत्तम् ॥

'गुणिनां सर्वे गुणा दुर्जनैर्दोषत्वेनैव गण्यन्ते' इति वक्तुं तत्तद्गुणेषु तत्तद्दोषारोपप्रकारमाह—

**जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं**
**शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि ॥**
**तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे**
**तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः ? ॥ ५४ ॥**

जाड्यमिति ॥ ह्रीर्लज्जा अस्तीति तस्मिन्पुरुषे जडस्य भावो जाड्यमारोपयन्तीति शेषः, एवमेवोत्तरत्रापि यथायथं बोध्यम् । व्रते रुचिः प्रीतिर्यस्य तस्मिन्पुरुषे दम्भः परप्रतारणार्थमनुष्ठानम् । शुचौ शुद्धपुरुषे कितवस्य धूर्तस्य भावः कैतवं धूर्तता, शूरे शौर्यादिगुणयुक्ते निर्घृणता निर्दयता, ऋजौ सरले विमतिता बुद्धिहीनता, प्रियमालपति तच्छीले पुरुषे दैन्यं दीनता, तेजस्विनि तेजोविशिष्टे अवलिप्तता गर्विष्ठता, 'अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च' इति मेदिनी । वक्तरि वचनपटौ निन्दितमुखं यस्य तस्य भावो मुखरता अबद्धमुखता, अबद्धवक्तृत्वमिति यावत् । 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः । स्थिरे निश्चले अशक्तिः शक्तिराहित्यम् । तत्तस्मात् गुणिनां को नाम स गुणो भवेत् ? यो दुर्जनैर्दुष्टजनैर्नाङ्कितोऽनारोपितदोष इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

हेयोपादेयतया दोषान्गुणांश्च दर्शयति—

**लोभश्चेदगुणेन किं, पिशुनता यद्यस्ति किं पातकैः,**
**सत्यं चेत्तपसा च किं, शुचि मनो यद्यस्ति तीर्थेन किम् ? ॥**

**सौजन्यं यदि किं निजैः, सुमहिमा यद्यस्ति किं मण्डनैः,**
**सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना? ॥ ५५ ॥**

**लोभश्चेदिति** ॥ प्राप्तेऽप्यर्थेऽधिकप्राप्तीच्छा लोभः, सोऽस्ति चेत् अगुणेन गुणराहित्येन किम्? एकस्मिन्लोभे सति सर्वगुणानां व्यर्थत्वादित्यर्थः। तदुक्तं भागवते 'यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः। लोभः स्वल्पोऽपि तान्हन्ति श्वित्रो रूपमिवेप्सितम्' इति। पिशुनस्य दुर्जनस्य भावः पिशुनता दुर्जनता, 'पिशुनो दुर्जनः खलः' इत्यमरः। सर्वेषां पापानां पिशुनतायामेवान्तर्भावादित्यर्थः। सत्यं यथार्थभाषणं चेत्तपसा कृच्छ्रचान्द्रायणादिना किम्? सत्येनैव कृच्छ्रादिफलप्राप्तेरित्यर्थः। तदुक्तं श्रुतौ 'सत्यं परं परꣳ सत्यꣳ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳ हि सत्यं तस्मात्सत्ये रमन्ते। सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति' इति। यदि मनोऽन्तःकरणं शुचि शुद्धं चेत्तीर्थेन तीर्थस्नानेन किम्? तीर्थस्नानजन्यफलस्य तेनैव जननादित्यर्थः। सुजनस्य भावः सौजन्यं यदि चेत् निजैरात्मीयैः किम्? सुजनतया सर्वेषामात्मीयत्वसंपादनादित्यर्थः। 'गुणैः' इति पाठे इतरैर्गुणैरित्यर्थः। सौजन्येनैवेतरगुणानां कार्यकरणादित्यर्थः। यदि सुष्ठु महिमा माहात्म्यम्, ऐश्वर्यमिति यावत्; चेत् मण्डनैरितरभूषणैः किम्? तस्यैव सर्वभूषणकार्यकारित्वादित्यर्थः। यदि सद्विद्या उत्तमविद्या चेत् धनैः किम्? सर्वधनेषु विद्याधनस्य प्राधान्यादित्यर्थः। यद्यपयशोऽपकीर्तिश्चेन्मृत्युना किम्? तस्यैव मृत्युकार्यकारित्वादित्यर्थः। पूर्वोक्तं वृत्तम् ॥

दुष्परिहराणि मानसिकानि दुःखानि कथयितुं तानि गणयित्वा दर्शयति—

**शशी दिवसधूसरो, गलितयौवना कामिनी,**
**सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः ॥**
**प्रभुर्धनपरायणः, सततदुर्गतः सज्जनो,**
**नृपाङ्गणगतः खलो, मनसि सप्त शल्यानि मे ॥ ५६ ॥**

**शशीति** ॥ शशी चन्द्रो दिवसे धूसरः प्रभाहीनः, कामिनी स्त्री गलितं नष्टं यौवनं यस्याः सा, सरः सरोवरं विगतं वारिजं कमलं यस्मात्तत्, शोभना आकृतिः करचरणाद्यवयवा यस्य तस्य मुखमाननं न विद्यन्ते अक्षराणि वर्णा

---

पाठा०—१ स्वमहिमा.

यस्मिंस्तत्, अक्षररहितमित्यर्थः; प्रभुः स्वामी धने परायणस्तत्परः, सज्जनः साधुजनः सततं निरन्तरं दुर्गतो दारिद्र्यं प्राप्तः, खलो दुर्जनः नृपस्य राज्ञोऽङ्गणे चत्वरे गतः प्राप्तः, 'अङ्गणं चत्वराजिरे' इत्यमरः। एतानि सप्त शल्यानि मे मनसि वर्तन्ते। पृथ्वी वृत्तम्। लक्षणं पूर्वोक्तमेव॥

अत्यन्तकोपाविष्टानां राज्ञां स्वीयः कोऽपि नास्तीत्यग्निदृष्टान्तेनाह—

**न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम्॥**
**होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः॥ ५७॥**

**न कश्चिदिति**॥ चण्डोऽत्यन्तः कोपः क्रोधो येषां तेषाम्, भुवं भुञ्जन्ति ते भूभुजो राजानस्तेषामात्मीयः स्वकीयः कश्चित्कोऽपि नास्ति। नामेति प्रसिद्धौ। तत्र दृष्टान्तः—जुहोति हविर्ददतीति जुह्वंस्तं होतारमपि तेन स्पृष्टः कृतस्पर्शः पावकोऽग्निर्दहत्येव, न तु तमुपेक्षत इत्यर्थः। तथा राजानोऽपीति भावः। अनुष्टुब् वृत्तम्॥

सेवाधर्मोऽतिकठिन इत्याह—

**मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा**
**धृष्टः पार्श्वे वसति च तदा दूरतश्चाप्रगल्भः॥**
**क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः**
**सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ ५८॥**

**मौनान्मूक** इति॥ सेवाधर्मः परममत्यन्तं गहनो दुरधिगमोऽस्ति, यतो योगिनामप्यगम्यो ज्ञातुमशक्यः; तमेवाह—मौनान्मौनधारणान्मूकोऽस्तीत्युच्यत इति शेषः, एवमेवाग्रेऽपि; मौनधारिणं पुरुषं जना मूकत्वेन गणयन्तीत्यर्थः। प्रवचने पटुः समर्थश्चेत् वातं न सहते वातुलो वातरोगी। 'वातूलो वातुलोऽपि स्यात्' इति द्विरूपकोशाद्ध्रस्वमध्योऽपि। 'वात सुखसेवनयोः' इति अदन्तः। बाहुलकादुलच् इति रामाश्रमीकारः। 'वातुलो वातलेऽपि स्यात्' इति हेमचन्द्रः। अथवा,—जल्पको वाचालः, वाग्मिनं पुरुषं वाचालत्वेन वातरोगित्वेन वा गणयन्तीत्यर्थः। पार्श्वे पार्श्वभागे वसति चेत् धृष्टोऽविनीतः। 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः। लज्जारहितो वा। 'स्यादधृष्टे तु शालीनः' इत्यमरकोशेऽधृष्टशब्देन सलज्जस्य ग्रहणादर्थाद्धृष्टशब्देन

---

पाठा०—१ भवति च तथा.

निर्लज्जस्य ग्रहणम् । सर्वदा समीपे वसन्तं पुरुषं धृष्टत्वेन निर्लज्जत्वेन गणयन्तीत्यर्थः । दूरतो वसतीति पूर्वस्यैवानुषङ्गः । चेत् तदा अप्रगल्भोऽप्रौढः, दूरे वसन्तं पुरुषमप्रौढत्वेन गणयन्तीत्यर्थः । क्षान्त्या क्षमयायुक्त इति शेषः। चेत् भीरुर्भयशीलः, क्षमाशीलं पुरुषं भीरुत्वेन गणयन्तीत्यर्थः; यदि न सहते तदा प्रायशो बाहुल्येन नाभिजातः अज्ञोऽकुलीनो वा । 'अभिजातस्तु कुलजे बुधे' इत्यमरः । असहनशीलं पुरुषमज्ञत्वेनाकुलीनत्वेन वा गणयन्तीत्यर्थः । 'जना' इति सर्वत्र योज्यम् । मन्दाक्रान्ता वृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति तल्लक्षणात् ॥

नीचसेवाकारिणः सुखिनो न भवन्तीत्याह—

**उद्भासिताखिलखलस्य विशृङ्खलस्य**
**प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः ॥**
**दैवादवाप्तविभवस्य गुणद्विषोऽस्य**
**नीचस्य गोचरगतैः सुखमाप्यते कैः[1] ॥ ५९ ॥**

**उद्भासितेति** ॥ उद्भासिताः प्रकाशिता अखिला खला येन तस्य विशृङ्खलस्य प्रतिबन्धरहितस्य प्राग्जातं पूर्वजन्मनि जातमिदानीं विस्मृतं निजं स्वकीयमधमं निन्द्यं कर्म, तस्मिन्वृत्तिर्वर्तनं यस्य, दैवाददृष्टादवाप्तः प्राप्तो विभव ऐश्वर्यं येन तस्य, गुणान् द्वेष्टीति गुणद्विट् तस्यास्य नीचस्य जनस्य गोचरगतैश्चक्षुर्विषयगतैः कैः पुरुषैः सुखमाप्यते प्राप्यते? न कैश्चिदित्यर्थः । वसन्ततिलका वृत्तम् ॥—

खल-सज्जनयोर्मित्रता दिनपूर्वार्धपरार्धविभागसंबन्धिच्छायेव संकोचविकासशालिन्यस्तीति दर्शयति—

**आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ॥**
**दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ६० ॥**

**आरम्भगुर्वीति** ॥ आरम्भे गुर्वी महती, क्रमेण क्षयिणी प्रतिक्षणं क्षयशीला, पुरा पूर्वं लघ्वी, पश्चात् वृद्धिरस्या अस्तीति वृद्धिमती, दिनस्य दिवसस्य पूर्वार्धं च परार्धं च ताभ्यां भिन्ना, छायेव खला दुर्जनाश्च सज्जनाः साधवश्च तेषां मैत्री मित्रता भवति; यथा दिनपूर्वार्धे आरम्भे छाया महती क्रमेण दिनवृद्ध्या क्षयिणी तथा खलानां मैत्री आरम्भे महती परिणामे लघ्वी भवतीत्यर्थः । यथा

---

पाठा०—१ सुखमाप्यते.

दिनपरार्धे आरम्भे लघ्वी छाया पश्चाद्दिनह्रासे वृद्धिमती भवति, तथा सज्जनानां मैत्री आरम्भे लघ्वी परिणामे क्रमेण महती भवतीति भावः। उपजातिर्वृत्तम् ॥

'पिशुनाः कारणं विना जगति वैरिणो भवन्ति' इति लुब्धक-धीवरदृष्टान्तपूर्वकं दर्शयति—

**मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ॥**
**लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ६१ ॥**

**मृगमीने**ति॥ जगति लोके लुब्धको व्याधः, 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः। धीवरः कैवर्तः, 'कैवर्ते दाशधीवरौ' इत्यमरः। पिशुनो दुर्जनस्ते च निष्कारणं कारणं विना वैरिणः शत्रवो भवन्ति। केषामित्याकाङ्क्षायामाह—**मृगमीने**ति। तृणं च जलं च संतोषश्च तैर्विहिता वृत्तिर्जीविका येषां तेषाम्, 'वृत्तिर्वर्तनजीवने' इत्यमरः। मृगा हरिणाश्च मीना मत्स्याश्च सज्जनाः साधवश्च तेषाम्। अत्र लुब्धक-धीवरौ दृष्टान्तभूतौ पिशुनश्च दार्ष्टान्तिकभूतः। तथा च यथा लुब्धक-धीवरौ मृग-मीनयोर्निष्कारणवैरिणौ तथा पिशुनः सज्जनानां निष्कारणवैरी भवतीति तात्पर्यम्। आर्या वृत्तम् ॥

वाञ्छादिगुणविशिष्टा नरा अतिपूज्या भवन्तीति दर्शयन्नाह—

**वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता**
**विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ॥**
**भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले**
**ह्येते[1] येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ६२ ॥**

**वाञ्छे**ति ॥ एते पूर्वोक्ता निर्मला निर्दोषा गुणा येषु निवसन्ति तिष्ठन्ति तेभ्यो नरेभ्यो नमो नमस्कारोऽस्तु, ते नरा नमस्कारार्हाः पूज्या इत्यर्थः। ते के तानाह—**वाञ्छे**ति। सज्जनानां साधूनां संगमे सहवासे वाञ्छा इच्छा परेषां गुणस्तस्मिन्प्रीतिरभिरुचिः, गुरौ नम्रता नम्रत्वम्, विद्यायां वेदशास्त्रादिविद्यायां व्यसनमासक्तिः, 'व्यसनं त्वशुभे सक्तौ' इति मेदिनी। स्वस्याऽऽत्मनो योषिति स्त्रियां रती रागः, 'रतिः स्मरस्त्रियां रागे' इति हेमचन्द्रः। लोके अपवादो निन्दा तस्माद्भयं भीतिः, 'अपवादौ तु निन्दाज्ञे' इत्यमरः। शूलिनि शिवे, 'शिवः शूली महेश्वरः' इत्यमरः। भक्तिः परमानुरक्तिः 'भक्तिः परानुरक्तिरीश्वरे'

पाठा०–१ एते येषु वसन्ति.

इति शाण्डिल्यसूत्रात् । आत्मनो मनसो दमने निग्रहे शक्तिः सामर्थ्यम्, खले दुर्जने संसर्गः सहवासस्तस्य मुक्तिस्त्याग इति । शार्दूलविक्रीडितं वृत्तम् ॥

महतां स्वभावसिद्धान् गुणानाह—

**विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ॥**
**यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६३ ॥**

**विपदी**ति ॥ इदं पूर्वोक्तं सर्वं महात्मनां महतां प्रकृत्या स्वभावेन सिद्धं निष्पन्नम्, न त्वन्यतः शिक्षितमित्यर्थः । इदं किम् ? विपदि विपत्तौ धीरस्य भावो धैर्यं धीरत्वम्, अथाभ्युदये ऐश्वर्ये क्षमा क्षान्तिः, सदसि सभायां वाक्पटुता वाक्पाटवम्, युधि संग्रामे विक्रमः पराक्रमः, यशसि सत्कीर्ताव-भिरुचिः प्रीतिः, श्रुतौ वेदादिषु व्यसनमासक्तिरिति । द्रुतविलम्बितं वृत्तम् ॥

साधूनां महत्त्वमेव प्रकारान्तरेणाह—

**प्रदानं प्रच्छन्नं, गृहमुपगते संभ्रमविधिः,**
**प्रियं कृत्वा मौनं, सदसि कथनं नाप्युपकृतेः ॥**
**अनुत्सेको लक्ष्म्या, निरभिभवसाराः परकथाः,**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ? ॥ ६४ ॥**

**प्रदान**मिति ॥ प्रदानं ब्राह्मणेभ्यो दानं प्रच्छन्नं गुप्तम्, न तु प्रसिद्धमि-त्यर्थः । गृहमुपगते प्राप्तेऽतिथौ संभ्रमविधिरादरविधानम्, 'संभ्रमः साध्व-सेऽपि स्यात्संवेगादरयोरपि' इति मेदिनी । प्रियं हितं कृत्वा मौनं तूष्णीमव-स्थानम्, वाचाऽनुद्धाटनमित्यर्थः । उपकृतेरुपकारस्यापि, अपिः समुच्चये, सदसि सभायां न कथनं कथनाभावः, स्वयं कृतस्याप्युपकारस्यानुद्धाटनमि-त्यर्थः । लक्ष्म्याः संपत्तेरनुत्सेकोऽगर्वः । सत्यां संपत्तौ गर्वाभाव इत्यर्थः । परेषां कथा निरभिभवोऽभिभवरहितः सारः सारांशो यासु ताः । 'चिरवि-भवसाराः' इति पाठे चिरं विभव एव सारो यासु ताः । इदं पूर्वोक्तं सतां विषममसिधाराव्रतं केनोद्दिष्टम् ? एतस्य व्याख्यानमष्टाविंशतिश्लोके कृत-मस्ति । शिखरिणी वृत्तम् । लक्षणं तूक्तमेव ॥

सत्पात्रे दानाद्येव महतां भूषणं नान्यदिति दर्शयति—

**करे श्लाघ्यस्त्यागः, शिरसि गुरुपादप्रणयिता,**
**मुखे सत्या वाणी, विजयिभुजयोर्वीर्यमतुलम् ॥**

---

पाठा०–१ चाभिरति°. २ चाप्युपकृतेः. ३ गुरुपादप्रणमता.

हृदि स्वच्छा वृत्तिः, श्रुतमधिगतैकव्रतफलं,
विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ६५ ॥

**करे** इति । इदं पूर्वोक्तं ऐश्वर्येण विनापि ऐश्वर्यमन्तरापि प्रकृत्या स्वभावेन महान्तस्तेषां मण्डनं भूषणं, नान्यदित्यर्थः । इदं किम्? करे हस्ते श्लाघ्यः स्तुत्यस्त्यागः सत्पात्रे दानं तदेव हस्तभूषणम्, न तु कितवादिभ्यो दानमित्यर्थः । एवमुत्तरत्राऽपि बोध्यम् । शिरसि मस्तके गुरोः पादयोः प्रणयिता नम्रता, गुरुपादयोर्मस्तकस्य नम्रीकरणमित्यर्थः, मुखे सत्या यथार्था वाणी, भुजयोर्बाह्वोर्विजयि जयशीलमनुपमं वीर्यं बलम्, हृदि अन्तःकरणे स्वच्छा निर्मला वृत्तिर्वर्तनम्, अधिगतं प्राप्तमेकं मुख्यं व्रतमीश्वरप्राप्तिचिन्तनरूपो नियमः, स एव तस्य फलं वा येन तत एवंविधं श्रुतं शास्त्राद्यध्ययनम्, शास्त्राध्ययनस्य मुख्यं फलमीश्वरज्ञानमिति तात्पर्यम् । शिखरिणी वृत्तम् ॥

संपदापदोर्महतामन्तःकरणस्थितिमाह—

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ॥
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ६६ ॥

**संपत्स्विति** ॥ महतां चित्तमन्तःकरणं संपत्सु संपत्तिषु उत्पलवत् कमलवत् कोमलं मृदु भवति, उत्सेकरहितमित्यर्थः । आपत्सु च महांश्चासौ शैलः पर्वतस्तस्य शिलानां संघातः समूहस्तद्वत्कर्कशं कठिनम्, विपत्काले धीरत्वं भजत इत्यर्थः । अनुष्टुब् वृत्तम् ॥

संसर्गवशादेव गुणवैचित्र्यं भवतीत्युदकदृष्टान्तेन दर्शयति—

संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ॥
स्वातौ सागरशुक्तिसंपुटगतं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ६७ ॥

**संतप्तेति** ॥ संतप्ते अयसि लोहे संस्थितस्य पयसो जलस्य नामापि न ज्ञायते, 'श्रूयते' इति पाठेऽपि स एवार्थः; संतप्तलोहसंपर्काज्जलं समूलं नश्यतीत्यर्थः । तदेव जलं नलिन्याः कमलिन्याः पत्रे पर्णे स्थितं सत् मुक्ताकारतया राजते शोभते, नलिनीपत्रसंसृष्टं तदेव मौक्तिकवद्भासत इत्यर्थः । तदेव स्वात्यां

---

पाठा०—१ श्रुतमधिगतं च श्रवणयोः. २ संवासतः.

स्वातीनक्षत्रे सागरे समुद्रे या शुक्तिस्तस्याः संपुटे गतं सत् मौक्तिकं जायते, शुक्तिसंसर्गात्तदेव मौक्तिकं भवतीत्यर्थः। एवं प्रायेण प्रायशोऽधममध्यमोत्तमगुणः संसर्गतः सहवासाज्जायते, यथा तप्तलोहसंसर्गादेकस्यैवोदकस्य परिणामे वैचित्र्यं भवति, तथाऽधमादिसहवासाद्गुणवैचित्र्यं भवति; तस्मात्पुरुषैरुत्तमसंसर्गः कर्तव्यो नाधममध्यमयोरिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥

आचरणवशात्पुत्रादिलक्षणमाह—

**यः प्रीणयेत्सुचरितैः पितरं स पुत्रो**
**यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ॥**
**तन्मित्रमापदि सुखे च समक्रियं य-**
**देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥**

**यः प्रीणयेदि**ति ॥ यत् एतत्पूर्वोक्तं त्रयं जगति लोके पुण्यकृतः सुकृतिनो लभन्ते प्राप्नुवन्ति, नान्य इत्यर्थः। तत्त्रयं किम्? यः सुचरितैः शोभनाचरणैः पितरं जनकं प्रीणयेत्संतोषयेत् स एव पुत्रः, नान्य इत्यर्थः। यद्भर्तुरेव हितं प्रियमिच्छति तदेव कलत्रं भार्या, नान्येत्यर्थः। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। यदापदि विपत्तौ सुखे च समा समाना क्रिया यस्य तदेव मित्रं, नान्यदित्यर्थः। वसन्ततिलका वृत्तम् ॥

प्रवृत्ति-निवृत्तिमार्गभेदेन मुख्यान्देवादीनेव सुखहेतूनाह—

**एको देवः केशवो वा शिवो वा ह्येकं मित्रं भूपतिर्वा यतिर्वा ॥**
**एको वासः पत्तने वा वने वा ह्येका भार्या सुन्दरी वा दरी वा ॥ ६९ ॥**

**एक** इति ॥ केशवो विष्णुर्वाऽथवा शिवः शंकरो वा एको मुख्यो देवः, ज्ञेय इति शेषः। एवमुत्तरत्रापि यथायोग्यं बोध्यम्। 'हिः' पादपूरणे। प्रवृत्तिमार्गे निवृत्तिमार्गे चोभयोरपि सुखजनकत्वादित्यर्थः। भूपती राजा वा यतिः संन्यासी वा एकं मुख्यं मित्रं, नान्यदित्यर्थः; उभयत्रोभयोर्मित्रकार्यकारित्वादिति भावः। पत्तने नगरे वा वनेऽरण्ये वा एको मुख्यो वासो वसतिः, नान्यत्रेत्यर्थः; प्रवृत्तौ नगरे निवृत्तावरण्ये वासः सुखद इति भावः। सुन्दरी रमणी वा दरी पर्वतगुहा वा एका मुख्या भार्या पत्नी, नान्येत्यर्थः। प्रवृत्तौ सुन्दरस्त्री निवृत्तौ गुहा च सुखदेति भावः। शालिनी वृत्तम्। लक्षणं तूक्तमेव ॥

---

**पाठा०**-१ प्रीणाति यः सुचरितैः.

नम्रत्वादिगुणैः साधवो जगति पूज्या भवन्तीत्याह—

**नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान् ख्यापयन्तः**
**स्वार्थान्संपादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ॥**
**क्षान्त्यैवाऽऽक्षेपरूक्षाक्षरमुखरमुखान् दुर्मुखान्दूषयन्तः**
**सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ? ॥७०॥**

**नम्रत्वेने**ति ॥ नम्रस्य भावो नम्रत्वं, तेनोन्नमन्त उन्नतिं गच्छन्तः, जगति यद्वस्तु नम्रीभूतं तदुन्नतिं न गच्छति, सन्तस्तु नम्रीभावेनोन्नतिं गच्छन्ति, इदमेवाश्चर्यमिति भावः, एवमेवोत्तरत्रोहनीयम् ; तथा परेषां गुणास्तेषां कथनैः स्वान्स्वकीयान् गुणान् ख्यापयन्तः प्रकाशयन्तः सन्तः स्वार्थान्संपादयन्तः, तथा परेषामर्थे विततपृथुतरारम्भयत्नाः आरभ्यन्त इत्यारम्भाः कर्तव्यकृत्यानि, महान्तश्च ते आरम्भाश्च महारम्भास्तेषु यत्नः, पृथुतरश्चासौ महारम्भयत्नश्च, विततो विस्तृतः, सर्वत्र प्रख्यात इति यावत् ; पृथुतरोऽतिशयेन महान् एतादृशो महारम्भयत्नो येषां ते, परार्थे कर्तव्यकृत्येष्वतिशयेन यत्नकारिण इत्यर्थः । तथा आक्षेपेण भर्त्सनेन रूक्षाण्यक्षराणि वर्णास्तैर्मुखरं वाचालं मुखं येषां तान् 'आक्षेपेण भर्त्सनाकृष्टिः' इति मेदिनी । दुर्मुखान् दुष्टान् क्षान्त्या क्षमयैव दूषयन्त एतादृशाः आश्चर्येण सहिता चर्या आचरणं येषां ते सन्तः साधवो जगति बहुमता बहुमान्याः सन्तः कस्य नाभ्यर्चनीयाः पूज्या न भवन्ति ? अपि तु सर्वेषामपि पूज्या भवन्तीत्यर्थः । स्रग्धरा वृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति तल्लक्षणात् ॥

परोपकारिणां स्वभावं वृक्षादिदृष्टान्तपूर्वकं वर्णयति—

**भवन्ति नम्रास्तरवः फलोद्गमे नवाम्बुभिर्भूमिविलम्बिनो घनाः ॥**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥७१॥**

**भवन्ती**ति ॥ सत्पुरुषाः सज्जनाः समृद्धिभिरैश्वर्यैरनुद्धता भवन्ति, परोपकारिणां परानुपकुर्वन्ति ते परोपकारिणस्तेषामेष स्वभाव एवास्ति । तत्र दृष्टान्तावाह—तरवो वृक्षाः फलानामुद्गमे प्रादुर्भावे नम्रा भवन्ति, घना मेघा नवानि नूतनानि अम्बूनि जलानि तैर्भूमिं विलम्बन्ते इति भूमिविलम्बिनो भवन्ति, यथा फलोद्गमादौ वृक्षादयो नम्रीभवन्ति तथा ऐश्वर्यप्राप्तावपि सत्पुरुषा नम्रीभवन्तीति भावः । वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणात् ॥

कर्णादीनां शास्त्रश्रवणादिगुणवतामेव श्रेष्ठत्वमित्याह—

**श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ॥**
**विभाति कायः करुणापराणां परोपकारैर्न तु चन्दनेन ॥ ७२ ॥**

**श्रोत्र**मिति ॥ श्रोत्रं कर्णः श्रुतेनैव शास्त्रश्रवणेनैव विभाति शोभते, अस्योत्तरत्रापि संबन्धः; कुण्डलेन कर्णभूषणेन न शोभते, तथा पाणिर्हस्तो दानेन विभाति कङ्कणेन न, तथा करुणापराणां कृपापराणां कायो देहः परेषु उपकारैर्विभाति, चन्दनेन न विभाति । तस्माच्छास्त्रश्रवणादिकं पुरुषैरवश्यं कर्तव्यमिति भावः । उपजातिर्वृत्तम् । लक्षणं तूक्तमेव ॥

सन्मित्रलक्षणमाह—

**पापान्निवारयति योजयते हिताय**
**गुह्यं निगूहति गुणान्प्रकटीकरोति ॥**
**आपद्गतं च न जहाति ददाति काले**
**सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ७३ ॥**

**पापादि**ति ॥ सन्तः साधव इदं पूर्वोक्तं सन्मित्रलक्षणं वदन्ति कथयन्ति । इदं किम् ? पापात्पापकर्मणो निवारयति निवारणं करोति, हिताय हिताचरणाय योजयते, गुह्यं गोप्यं निगूहति गोपयति, गुणान् प्रकटीकरोति, आपद्गतं विपद्गतं काले समये न जहाति न त्यजति, काले द्रव्यादिदानसमये द्रव्यादिकमपि ददाति । वसन्ततिलका वृत्तम् ॥

'सन्त इतरप्रार्थनानपेक्षया परहितायोद्योगं कुर्वन्ति' इति सूर्यादिदृष्टान्तेनाह—

**पद्माकरं दिनकरो विकचं करोति**
**चन्द्रो विकासयति कैरवचक्रवालम् ॥**
**नाभ्यर्थितो जलधरोऽपि जलं ददाति**
**सन्तः स्वयं परहिताभिहिताभियोगाः ॥ ७४ ॥**

**पद्माकर**मिति ॥ सन्तः स्वयं परहितेऽभिहितः कथितोऽभितो योग उपायो युक्तिर्वा येषां ते । यद्वा,—अभियोग उत्साहपूर्वको यत्नो येषां ते एवंविधा भवन्तीति शेषः । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । 'उत्साहपूर्वके यत्ने योगः' इति कोशान्तरम् । तत्र दृष्टान्तानाह—नाभ्यर्थितोऽन्येन केनाप्यप्रार्थितो दिनकरः सूर्यः पद्मानां कमलानामाकरं समूहं विकचं करोति

पाठा०–१ विकचीकरोति. २ परहितेषु कृताभियोगाः.

प्रफुल्लं करोति 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' इत्यमरः। नाभ्यर्थित इति सर्वत्र संबध्यते; नाभ्यर्थितश्चन्द्रः कैरवाणां कुमुदानां चक्रवालं मण्डलं विकासयति, नाभ्यर्थितो जलधरो मेघोऽपि जलं ददातीति। पूर्वोक्तमेव वृत्तम्॥

क्रियाभेदेन सत्पुरुषादीनां चातुर्विध्यमाह—

**एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये**
**सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये॥**
**तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये**
**ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे॥ ७५॥**

**एत** इति॥ ये स्वार्थं परित्यज्य त्यक्त्वा परेषामर्थान् घटयन्ति त एते सत्पुरुषा उत्तमपुरुषाः, भवन्तीति शेषः, एवमुत्तरत्रापि बोध्यम्; तु पुनः ये स्वार्थस्याविरोधेनानुकूल्येन परार्थमुद्यममुद्योगं बिभ्रति ते सामान्याः, मध्यमा इत्यर्थः। ये स्वार्थाय स्वार्थं कर्तुं परहितं निघ्नन्ति नाशयन्ति तेऽमी मानुषेषु मनुष्येषु राक्षसा राक्षसतुल्या विचारशून्याः, अधमा इत्यर्थः। ये तु निरर्थकं निष्प्रयोजनं परहितं घ्नन्ति ते के इति न जानीमहे, अतिनिन्द्या इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥

'सतां मैत्री संतापप्राप्तावपि न नश्यति' इति पयोदृष्टान्तेनाह—

**क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः**
**क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः॥**
**गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं**
**युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी॥ ७६॥**

**क्षीरेणे**ति॥ सतां साधूनां मैत्री ईदृशी क्षीरनीरसदृश्यखण्डिता। अस्तीति शेषः। तदेव विवृणोति—पुरा पूर्वं क्षीरेण दुग्धेनात्मानं गतं प्राप्तमुदकं जलं यस्मै ते प्रसिद्धा अखिलाः संपूर्णा गुणा माधुर्यादयो दत्ताः, अग्निसंयोगे सति क्षीरे तापमवेक्ष्य दृष्ट्वा तेन पयसा जलेन स्वस्यात्मा देहः कृशानावग्नौ हुतः, तत्तापेन शुष्कमभवदित्यर्थः। तत्क्षीरं मित्रस्य जलस्यापदं जलशोषणरूपामापत्तिं दृष्ट्वा पावकमग्निं गन्तुमुन्मन उत्कण्ठितमभवत्, उत्सिक्तमभूदित्यर्थः; तदेव क्षीरं तेन जलेन युक्तं सत् तु पुनः शाम्यति। उत्सिक्तं दुग्धं जलप्रक्षेपेण शाम्यतीति लोकप्रसिद्धम्। शार्दूलविक्रीडितं वृत्तम्॥

---

पाठा०-१ एके.

महात्मानो बहूनामाश्रयभूता भवन्तीति समुद्रान्योक्त्याह—

**इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-**
**मितश्च शरणार्थिनां शिखरिणां गणाः शेरते ॥**
**इतोऽपि वडवानलः सह समस्तसंवर्तकै-**
**रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ७७ ॥**

इत इति ॥ इत एकस्मिन्प्रदेशे केशवो विष्णुः स्वपिति निद्राति, इतस्तदीयद्विषां भगवद्वैरिणां दैत्यानां कुलं समूहस्तिष्ठतीति शेषः; इतश्च शरणार्थिनां शरणागतानां शिखरिणां पर्वतानां गणाः समूहाः शेरते । इतोऽपि वडवानलो वडवाग्निः समस्ताः संवर्तकाः प्रलयकारिणोऽग्नयस्तैः सह तिष्ठति । 'अहो' इत्याश्चर्ये । सिन्धोः समुद्रस्य वपुः शरीरं विततं विस्तृतमूर्जितमतिबलिष्ठं भरं भारं सहत इति भरसहं चास्तीति। महात्मानः समुद्रवदुपकारिणामनुपकारिणां च सर्वेषामाश्रयभूता भवन्तीति भावः । पृथ्वीवृत्तम् । लक्षणं तूक्तमेव ॥

'तृष्णात्यागादिना साधुत्वं भवति' इति जनमुपदिशति—

**तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः**
**सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ॥**
**मान्यान्मानय विद्विषोऽप्यनुनय प्रच्छादय[2] स्वान्गुणान्**
**कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ ७८ ॥**

तृष्णामिति । एतत्पूर्वोक्तं सतां साधूनां लक्षणम्, भवतीति शेषः । एतत्किम् ? तृष्णां स्पृहां छिन्धि, क्षमां क्षान्तिं भज सेवस्व, पापे पापकर्मणि रतिं रागं मा कृथाः मा कुरु, सत्यं ब्रूहि वद, साधोः सज्जनस्य पदवीं मार्गमनुयाहि अनुगच्छ विद्वज्जनान्सेवस्व, मान्यान्मानार्हान्मानय, विद्विषोऽप्यनुनय सान्त्वय, स्वान्गुणान्प्रच्छादय, कीर्तिं यशः पालय, दुःखिते दयां कुरु । शार्दूलविक्रीडितं वृत्तम् ॥

प्रकारान्तरेणापि साधूनां लक्षणं कथयंस्तेषां दौर्लभ्यमाह—

**मनसि वचसि काये पुण्यपीयूषपूर्णा-**
**स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ॥**
**परगुणपरमाणून् पर्वतीकृत्य नित्यं**
**निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७९ ॥**

---

पाठा०—१ शरणार्थिनः शिखरिंपत्रिणः शेरते. २ प्रख्यापय.

**मनसीति** ॥ मनसि अन्तःकरणे, वचसि वाण्यां, काये देहे, पुण्यं सुकृतमेव पीयूषममृतं तेन पूर्णाः परिपूर्णाः। वाक्कायमनोभिः पुण्यमेव संपादयन्ति, न पापमित्यर्थः। उपकारश्रेणिभिरुपकारपङ्क्तिभिस्त्रिभुवनं प्रीणयन्तस्तर्पयन्तः सर्वदोपकारमेव कुर्वन्ति, नापकारमित्यर्थः। परेषां गुणास्तेषां परमाणून् पर्वतीकृत्य तत्प्रमाणान्कृत्वा नित्यं निजहृदि स्वहृदये विकसन्तः प्रकाशमानाः, सर्वदा परगुणेष्वेव दत्तदृष्टयो न दोषेष्वित्यर्थः। एवंविधाः सन्तः सज्जनाः कियन्तो द्वित्रा विरलाः सन्तीति। मालिनी वृत्तम् ॥

'साधवः स्वनिष्ठान्गुणान्परेषु संक्रामयन्ति' इति मलयान्योक्त्याह—

**किं तेन हेमगिरिणा रजताद्रिणा वा**
**यत्राश्रिताश्च तरवस्तरवस्त एव ॥**
**मन्यामहे मलयमेव यदाश्रयेण**
**कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ८० ॥**

**किं तेनेति** ॥ यत्राश्रितास्तरवो वृक्षास्ते तरव एव भवन्ति, तेन हेमगिरिणा सुवर्णाचलेन अथवा रजताद्रिणा वा किं? न किमपीत्यर्थः। वयं तु मलयमेव मलयाचलमेव महान्तं मन्यामहे। कुतः? यस्याश्रयेण कङ्कोलाश्च निम्बाश्च कुटजाश्च तेऽपि चन्दनाश्चन्दनवृक्षाः स्युर्भवन्तीति, चन्दनवृक्षवद्भासन्त इत्यर्थः। वसन्ततिलका वृत्तम् ॥

'धीराः पुरुषा अवश्यसंपाद्यत्वेन निश्चितमर्थं संपादयितुं यत्नं कुर्वन्तो मध्ये विघ्नैरभिभूता अपि निश्चितार्थप्राप्तिं विना न विरमन्ति' इत्यमुमर्थं समुद्रमथनप्रवृत्तदेवदृष्टान्तेनाह—

**रत्नैर्महार्हैस्तुतुषुर्न देवा, न भेजिरे भीमविषेण भीतिम् ॥**
**सुधां विना न प्रययुर्विरामं, न निश्चितार्थाद्विरमन्ति धीराः ॥ ८१ ॥**

**रत्नैरिति** ॥ धीरा गम्भीराः पुरुषा निश्चितार्थान्निश्चितमर्थं प्राप्य न विरमन्ति न विश्राम्यन्ति, आरब्धं यत्नं न त्यजन्तीत्यर्थः। तत्र दृष्टान्तमाह—रत्नैरिति। देवा महार्हैर्महामूल्यै रत्नैर्न तुतुषुः संतोषं न प्रापुः, अमृतमथनार्थं प्रवृत्ता देवा मध्ये उत्पन्नैरपि रत्नैर्न तुतुषुरित्यर्थः; तथा भीमं घोरं विषं तेन भीतिं भयं न भेजिरे न सिषिवुः। महाभयजनकेनोत्पन्नेन विषेणापि भयं न

पाठा०—१ चन्दनानि,

प्रापुरित्यर्थः। किं तु सुधाममृतं विना विरामं विश्रान्तिं न प्रययुर्न प्रापुः। प्राप्तव्यत्वेन निश्चितार्थरूपसुधाप्राप्तिं विना यत्नं न त्यजन्तीत्यर्थः। उपेन्द्रवज्रा वृत्तम्॥

'स्वकार्ये दत्तदृष्टिर्विवेकी पुरुषो मध्ये प्राप्तं सुखदुःखादिकं न गणयेत्' इति बोधयन्नाह—

**क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं**
**क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः॥**
**क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो**
**मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम्॥ ८२॥**

**क्वचिदिति**॥ क्वचित्कदाचिद्भूमौ पृथिव्यां शय्या शयनम्, करोतीति शेषः। एवमुत्तरत्रापि बोध्यम्; क्वचिदपि च पर्यङ्कशयनम्, क्वचिच्छाकाहारी शाकभोजी, क्वचिदपि च शाल्योदने रुचिर्यस्य सः, शाल्योदनभोजीत्यर्थः। क्वचित्कन्थां प्रावरणविशेषं धारयतीति धारी तथाविधः, क्वचिदपि च दिव्यं च तदम्बरं वस्त्रं तस्य धरो धारकः, कार्यार्थी कार्येच्छुः, प्रशस्तं मनोऽन्तःकरणं यस्य सः, विवेकीति यावत्। एवंविधः पुरुषः दुःखं न गणयति सुखं च न गणयतीति। शिखरिणी वृत्तम्॥

'सुजनतादिसर्वभूषणापेक्षया शीलमेवोत्तमं भूषणम्' इत्याह—

**ऐश्वर्यस्य विभूषणं सुजनता, शौर्यस्य वाक्संयमो,**
**ज्ञानस्योपशमः, श्रुतस्य विनयो, वित्तस्य पात्रे व्ययः॥**
**अक्रोधस्तपसः, क्षमा प्रभवितुर्धर्मस्य निर्व्याजता,**
**सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम्॥ ८३॥**

**ऐश्वर्यस्येति**॥ सुजनता सौजन्यमैश्वर्यस्य भूषणमलंकरणम्, भवतीति शेषः, एवमुत्तरत्रापि बोध्यम्, सत्यैश्वर्ये सौजन्यं संपादनीयमित्यर्थः; शौर्यस्य वीर्यस्य वाक्संयमो वाङ्नियमः, शौर्ये सति वाचा तदुद्घाटनं न कार्यमित्यर्थः; ज्ञानस्य तत्त्वज्ञानस्योपशमः शान्तिः, तत्त्वज्ञाने सति शान्तिरवश्यं संपादनीयेत्यर्थः; श्रुतस्यानेकशास्त्रश्रवणस्य विनयो नम्रता, शास्त्रश्रवणेन विनयोऽवश्यं संपादनीय इत्यर्थः; वित्तस्य द्रव्यस्य पात्रे सत्पात्रे व्ययो दानम्, सति वित्ते सत्पात्रे दानमवश्यं कर्तव्यमित्यर्थः; तपसोऽक्रोधः क्रोधराहित्यम्, तपः

---

पाठा०-१ क्वचिच्छाकाहारः.

कुर्वता क्रोधो न कार्य इत्यर्थः; प्रभवितुर्निग्रहानुग्रहसमर्थस्य क्षमा, निग्रहानुग्रहसमर्थेन क्षमाऽवश्यं संपादनीया, धर्मस्य स्वधर्माचरणस्य निर्व्याजता निष्कपटता, दम्भेन स्वधर्माचरणं न कार्यमित्यर्थः। सर्वेषामपि जनानां सर्वेषां गुणानां कारणमिदं शीलं स्वभावः परं श्रेष्ठं भूषणमस्ति। सर्वे एते गुणाः स्वभावानुरोधेन भवन्ति, न तु बलात्कारेणेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥

'धीरपुरुषा निन्दादिभिर्न्यायमार्गान्न प्रच्यवन्ति' इत्याह—

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु**
**लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ॥**
**अद्यैव वा मरणमस्तु युगान्तरे वा**
**न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८४ ॥**

**निन्दन्त्विति** ॥ नीत्यां नये निपुणाः कुशलाः पुरुषा निन्दन्तु निन्दां कुर्वन्तु, यदि वा अथवा स्तुवन्तु, लक्ष्मीः संपत् यथेष्टं यथेच्छं समाविशत्वागच्छतु वा गच्छतु, अद्यैव मरणं मृत्युरस्तु युगान्तरेऽन्ययुगे वाऽस्तु, तथापि धीरा गम्भीराः पुरुषा न्यायादनपेतोऽरहितस्तस्मात्पथो मार्गात् न्यायमार्गं विहायाऽन्यत्रैकमपि पदं चरणं न प्रविचलन्ति न गच्छन्ति। अनेन सत्स्वपि निन्दादिषु न्यायमार्गो न हातव्य इति सूचितम्। वसन्ततिलका वृत्तम् ॥

'प्रारब्धमेव जनस्य वृद्धि-क्षययोः कारणमस्ति' इति सर्पदृष्टान्तेनाह—

**भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा**
**कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ॥**
**तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा**
**लोकाः! पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ ८५ ॥**

**भग्नाशस्येति** ॥ हे लोकाः! यूयं नृणां मनुष्याणां वृद्धावैश्वर्ये क्षये दैवमेव कारणं हि निश्चितं पश्यत। एतदेव दृष्टान्तेनोपपादयति—केनचिन्मन्त्रिणा सर्पं धृत्वा स करण्डे निक्षिप्तः। तस्य स्थितिमाह—करण्डे पीडिता तनुर्देहो यस्मात एव भग्ना नष्टा आशा बहिर्निष्क्रमणाशा यस्य तस्य, क्षुधा क्षुधया कृत्वा म्लानानि क्षीणानीन्द्रियाणि यस्यैवंविधस्य भोगिनः सर्पस्य मुखे आखुर्मूषको विवरं करण्डस्य छिद्रं कृत्वा स्वयं निपतितो न केनाऽपि पातितः।

---

पाठा०-१ स्वस्थास्तिष्ठत दैव०.

असौ सर्पस्तु तस्य मूषकस्य पिशितेन मांसेन तृप्तः सन् तेनैव मूषकविहितेन पथा मार्गेण सत्वरं बहिर्यातो निर्गतः। यथा करण्डस्थितं सर्पमजानन्मूषकः करण्डस्य बिलं कृत्वाऽन्तः प्रविष्टः स्वादृष्टवशादेव तन्मुखे पतित्वा मृतः। सर्पस्तु स्वादृष्टवशादेव तन्मांसेन तृप्तः सन् तत्कृतेन बिलद्वारेण बहिर्निर्गत्य सुखितोऽभूत्तथा सर्वोऽपि जनः स्वादृष्टवशादेव सुखदुःखादिकं भुङ्क्त इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥

'आलस्यं विहायोद्यमकर्ता लोके सुखं प्राप्नोति' इत्याह—

**आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ॥**
**नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति ॥ ८६ ॥**

**आलस्य**मिति ॥ अलसस्य भाव आलस्यं व्यापाररहित्यं मनुष्याणां शरीरे तिष्ठतीति शरीरस्थो महान् रिपुः शत्रुर्हि निश्चितमस्ति। उद्यमेनोद्योगेन समः सदृशो बन्धुर्नास्ति, यमुद्यमं कृत्वा पुरुषो नावसीदति; दारिद्र्यादि दुःखं न प्राप्नोतीत्यर्थः। अनुष्टुप् वृत्तम् ॥

वृक्षादिवदापदोऽप्यागमापायित्वात्ताभिः सन्तो न संतप्यन्त इत्याह—

**छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः।**
**इति विमृशन्तः सन्तः संतप्यन्ते न ते विपदा ॥ ८७ ॥**

**छिन्नोऽपी**ति ॥ तरुर्वृक्षश्छिन्नोऽपि पुना रोहति प्रादुर्भूतो भवति, तथा क्षीणोऽपि क्षीणकलोऽपि चन्द्रः पुनरुपचीयते वृद्धिं प्राप्नोति, इत्यनेन प्रकारेणापद आगमापायित्वं विमृशन्तो विचारयन्तस्ते प्रसिद्धाः सन्तः साधवो विपदा आपदा न संतप्यन्ते दुःखं न प्राप्नुवन्तीति। आर्या वृत्तम् ॥

'दैवे प्रतिकूले सति पौरुषं निरर्थकं भवति' इतीन्द्रदृष्टान्तपूर्वकं दैवस्य श्रैष्ठ्यमाह—

**नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः**
**स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः ॥**
**इत्यैश्वर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे**
**तद्युक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥ ८८ ॥**

**नेते**ति ॥ बृहस्पतिर्गुरुर्यस्येन्द्रस्य नेता, नायकोऽस्तीति शेषः। एवमुत्तरत्रापि बोध्यम्; प्रहरणमायुधं वज्रं कुलिशम्, सुरा देवाः सेनायां समवेताः

---

पाठा०—१ महारिपुः. २ कुर्वाणो नावसीदति.

सैनिकाः, दुर्गं स्वर्गः, हरेर्विष्णोरनुग्रहः कृपा, किलेति प्रसिद्धम्; वारणो हस्ती ऐरावतः, इति पूर्वोक्तप्रकारेण ऐश्वर्यं च बलं च ताभ्यामन्वितोऽपि बलभिदिन्द्रः, 'मघवा' इत्यपि पाठः। संगरे सङ्ग्रामे परैः शत्रुभिर्भग्नः, तत्तस्मात् ननु निश्चितं दैवमेव शरणं रक्षितृ इति युक्तम्, 'व्यक्तम्' इति पाठे स्पष्टमित्यर्थः; तस्मात्तथा दैवहीनं पौरुषं पुरुषप्रयत्नं धिग्धिगिति; दैवहीनः पुरुषप्रयत्नो नितरां निष्फल इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥

'सर्वकृत्यस्य कर्माधीनत्वेऽपि सुधीभिर्यद्यत्कर्तव्यं तद्विचारपूर्वकमेव कर्तव्यम्' इति बोधयन्नाह—

**कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी॥**
**तथाऽपि सुधिया भाव्यं सुविचार्यैव कुर्वता॥ ८९॥**

**कर्मायत्त**मिति॥ यद्यपि पुंसां फलं सुखदुःखादिकं कर्मायत्तं कर्माधीनमस्ति, यादृशं कर्म तादृशं सुखदुःखादिकं भवति, सती असती वा बुद्धिः कर्मानुसरत्यनुगच्छतीति कर्मानुसारिण्यस्ति, तथापि सुधिया सुष्ठु विचार्यैव कर्म कुर्वता भाव्यम्; बुद्धिमता पुरुषेण यद्यत्कर्म कर्तव्यं तत्तद्विचारपूर्वकमेव कर्तव्यमित्यर्थः। अनुष्टुब् वृत्तम्॥

'भाग्यहीनः पुरुषो यत्रकुत्राऽपि गतो दुःखमेव लभते' इति खल्वाटदृष्टान्तेनाह—

**खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके**
**वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः॥**
**तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः,**
**प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः॥ ९०॥**

**खल्वाट** इति॥ यत्र प्रदेशे भाग्यरहितो भाग्यहीनः पुरुषो गच्छति तत्र तं प्रत्यापदो, विपत्तयः प्रायो बाहुल्येन यान्ति आगच्छन्ति, 'तत्रापदां भाजनम्' इति पाठे आपदां विपत्तीनां भाजनं पात्रं भवतीत्यर्थः। तदेव दृष्टान्तेनोपपादयति—खल्वाटो निष्केशशिराः पुरुषो बहिरटन् दिवसेश्वरस्य सूर्यस्य किरणैर्मस्तके शिरसि संतापितः सन् अनातपमुष्णरहितं देशं वाञ्छन्निच्छन् विधिवशाद्दैववशात्तालस्य तालवृक्षस्य मूलं गतः; तत्राऽपि तस्मिन्स्थलेऽपि प्रारब्ध-

---

पाठा०–१ °द्बिल्वस्य मूलं.

वशादकस्मात् पतता महाफलेनास्य खल्वाटस्य शिरः सशब्दं यथा स्यात्तथा भग्नमभूदिति शेषः, 'तत्राप्याशु' इति पाठे शीघ्रमित्यर्थः; यथा सूर्यकिरणसंतप्तः खल्वाटश्छायाप्रदेशे गतोऽपि तालफलेन भग्नशिरा अभवत्, अतः भाग्यहीनः पुरुषो यत्रकुत्रापि गतः प्रायो दुःखमेव लभत इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥

'सर्वत्र दैवमेव बलीयः' इति सदृष्टान्तमाह—

**गजभुजङ्गमविहङ्गमबन्धनं शशिदिवाकरयोर्ग्रहपीडनम् ॥**
**मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥ ९१ ॥**

**गजभुजङ्गमेति** ॥ गजो हस्ती, भुजङ्गमः सर्पः, विहङ्गमः पक्षी, तेषां बन्धनं भवति; शशी चन्द्रः, दिवाकरः, सूर्यः, तयोर्ग्रहेण राहुणा पीडनम्, मतिमतां बुद्धिमतां दरिद्रतां दारिद्र्यं विलोक्य दृष्ट्वा विधिर्दैवं बलवान्बलिष्ठोऽस्तीति मे मतिर्निश्चयोऽस्ति। 'अहो' इति वितर्के। द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणात् ॥

उत्तमपुरुषाणामपि लोकेऽल्पायुष्ट्वं दृष्ट्वा तान्सृजतो ब्रह्मणोऽपि विचारशून्यत्वं दर्शयन्नाह—

**सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ॥**
**तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ९२ ॥**

**सृजतीति** ॥ तावदादौ ब्रह्मा अशेषा ये गुणास्तेषामाकरः खनिस्तम्, अशेषगुणपरिपूर्णमित्यर्थः, भुवोऽलङ्करणं शोभाकरं पुरुषरत्नं सृजति। सृष्ट्वा च तदपि पुरुषरत्नमपि तत्क्षणभङ्गि तत्क्षणनाशशीलं अल्पायुः करोति चेत्, 'अहह' इति खेदे, कष्टं यथा स्यात्तथा इयं विधेर्ब्रह्मणोऽपण्डितस्य भावोऽपण्डितताऽज्ञानिताऽस्ति। पूर्वोक्तमेव वृत्तम् ॥

'जन्मकाले विधिना ललाटलिखितस्यान्यथाकरणे न कोऽपि समर्थः' इति करीरादिदृष्टान्तेनाह—

**पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं,**
**नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम्? ॥**
**धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं,**
**यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः? ॥ ९३ ॥**

---

पाठा०-१ भुजङ्गमयोरपि बन्धनं. २ समीक्ष्य.

**वन** इति ॥ पुरा पूर्वं कृतानि पुण्यानि सुकृतानि वनेऽरण्ये, रणे संग्रामे शत्रवश्च जलं चाग्निश्च तेषां मध्ये महार्णवे महासमुद्रे, पर्वतस्य मस्तके शिखरे वा, 'पर्वतसंकटे' इति पाठे पर्वते संकटे चेत्यर्थः; सुप्तं निद्रितं, प्रमत्तं मद्यादिना, विषमे निम्नोन्नतभूमौ स्थितं पुरुषं रक्षन्ति, तस्मात्पुण्यमेव सदा नरैः कार्यमिति भावः । उपेन्द्रवज्रा वृत्तम् ॥

'सत्क्रियैव पुरुषेण कर्तव्या' इति तत्फलप्रदर्शनपूर्वकमाह—

**या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः**
**प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ॥**
**तामाराधय सत्क्रियां[1] भगवतीं भोक्तुं फलं वाञ्छितं**
**हे साधो ! व्यसनैर्गुणेषु[2] विपुलेष्वास्थां वृथां मा कृथाः ॥९८॥**

**या साधूंश्चेति** ॥ या सत्क्रिया खलान् दुर्जनान् साधून्सज्जनान्करोति, मूर्खान्विदुषः पण्डितान्करोति, द्वेषिणः शत्रून् हितान् हितकरान् करोति, परोक्षं प्रत्यक्षं कुरुते, हालाहलं विषविशेषं तत्क्षणात्क्षणमात्रेण अमृतं करोति, तस्मात् हे साधो ! वाञ्छितमिच्छितं फलं भोक्तुं भगवतीमैश्वर्यवतीं तां सत्क्रियामाराधय, विपुलेषु गुणेषु व्यसनैरासक्तिभिरास्थां यत्नं मा कृथा मा कुरु । 'आस्थानीयत्नयोरास्था' इत्यमरः । एतादृशीं सत्क्रियां विहाय गुणास्थया तद्विरुद्धो यत्नो न कार्य इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

'धीमता पुरुषेण यद्यत्कार्यं कर्तव्यं तस्य परिणामपर्यन्तं विचारं कृत्वा तत्कर्तव्यम्' इत्याह—

**गुणवदगुणवद्वा कुर्वता कार्यमादौ[3]**
**परिणतिरवधार्या यत्नतः पण्डितेन ॥**
**अतिरभसकृतानां कर्मणामाविपत्ते-**
**र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ९९ ॥**

**गुणवदिति** ॥ आदौ प्रथमं गुणा विद्यन्ते यस्मिंस्तद्गुणवत् वा अथवा अगुणवत्तद्रहितं कार्यं कुर्वता पण्डितेन यत्नतः परिणतिः परिणामोऽवधार्या विचार्या, प्रथममेवारभ्यमाणस्य कर्मणः परिणामे सुखदत्वं दुःखदत्वं वेति विचारणीयमित्यर्थः । विपक्षे बाधकमाह—अतिरभसेनातित्वरया कृतानां

---

**पाठा०**–१ चक्रिकां भगवतीं. २ त्वमतो गुणेषु. ३ कार्यजातं.

कर्मणां विपाकः परिणाम आविपत्तेर्मरणपर्यन्तं हृदयं दहतीति हृदयदाही शल्येन शङ्कुना तुल्यः । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । बाणाग्रजन्यव्रणतुल्यदुःखवत् भवतीति भावः । मालिनी वृत्तम् । लक्षणं पूर्वोक्तमेव ॥

एतस्यां कर्मभूमौ जन्म प्राप्य पुरुषेण तप एव कर्तव्यं नान्यदित्यभिप्रायेणाह—

**स्थाल्यां वैडूर्यमय्यां पचति तिलकणांश्चन्दनैरिन्धनाद्यैः**
**सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः ॥**
**कृत्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्ता-**
**त्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥ १०० ॥**

**स्थाल्या**मिति ॥ यो मनुजो मनुष्य इमां कर्मभूमिं सदाचरणं कर्तुं योग्यां भूमिं प्राप्य तपः कृच्छ्रचान्द्रायणादि न चरति न करोति स मन्दभाग्यो भाग्यहीनः पुरुषो वैडूर्यप्रचुरा वैडूर्यमयी तस्यां स्थाल्यां पाकभाजने इन्धनेष्वाद्यानि मुख्यानि तैश्चन्दनैस्तिलकणान्पचति विक्लेदयति तिलकणपाचनार्थं स्थालीचन्दनादिसंपादनं यथा व्यर्थं तद्वदन्यत्कर्म करोतीत्यर्थः; तथाऽर्कमूलस्यार्कवृक्षमूलस्य हेतोः सुवर्णस्येमानि सौवर्णानि तैर्लाङ्गलाग्रैर्हलाग्रैर्वसुधां पृथ्वीं विलिखति कर्षति, अर्कमूलसंपादनार्थं स्वर्णलाङ्गलेन भूमिखननं यथा व्यर्थं तद्वदित्यर्थः; तथा कर्पूरखण्डान्कर्पूरवृक्षशकलानि कृत्वा कोद्रवाणां कोरदूषकाणां 'हरिक' इति ख्यातानां आसमन्तात् वृतिमावरणमिह कुरुते, कोद्रवरक्षणार्थं कर्पूरवृक्षच्छेदनं यथा व्यर्थं तद्वदित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

'सर्वस्य कर्माधीनत्वात्कृतेऽपि महति यत्ने यदवश्यं भावि तद्भवत्येव' इत्याह—

**मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे**
**वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षताम् ॥**
**आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं महान्,**
**नाभाव्यं भवतीह कर्मवशतो, भाव्यस्य नाशः कुतः? ॥ १०१ ॥**

**मज्ज**न्विति ॥ महान्पुरुषोऽम्भसि जले मज्जतु, मेरोः शृङ्गं यातु, आहवे संग्रामे शत्रून् जयतु, वणिजः कर्म वाणिज्यम्, कृषिसेवनमादिर्यासां ताश्च सकला विद्याः कलाश्च शिक्षताम्, प्रयत्नं कृत्वा खगवत्पक्षिवद्विपुलं विस्तीर्णमाकाशं प्रयातु, तथापि भवितुं योग्यं भाव्यं न भाव्यमभाव्यं भवनानर्हं इह

---

पाठा०—१ तिलखलं चान्दनैरिन्धनौघैः. २ छित्त्वा.

लोके कर्मवशतः कर्माधीनत्वात् न भवति । भाव्यस्य भावितुं योग्यस्य नाशः कुतः स्यात् ? न कुतश्चिदित्यर्थः । तदुक्तम्–'यदभावि न तद्भावि भावि चेन्न तदन्यथा' इति । शार्दूलविक्रीडितं वृत्तम् ॥

'प्राचीनकर्मवशात्सर्वमघटमानमपि सिध्यति' इत्याह—

**भीमं वनं भवति तस्य पुरं प्रधानं**
**[1]सर्वो जनाः सुजनतामुपयान्ति तस्य ॥**
**कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा**
**यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०२ ॥**

**भीम**मिति ॥ यस्य नरस्य पुरुषस्य विपुलं बहु पूर्वसुकृतं पूर्वपुण्यमस्ति तस्य भीमं भयंकरमपि वनमरण्यं प्रधानं श्रेष्ठं पुरं नगरं भवति; तथा सर्वे जना लोकास्तस्य सुजनस्य भावः सुजनता तां सौजन्यमुपयान्ति प्राप्नुवन्ति, तद्विषये सौजन्यवतो भवन्तीत्यर्थः; तथा कृत्स्ना संपूर्णा भूः पृथ्वी सन्त उत्तमा निधयो रत्नानि च तैः पूर्णा परिपूर्णा भवति, पूर्वकर्मानुकूल्ये वसुधाऽन्वर्था सती यत्रकुत्रापि निध्यादिकं ददातीत्यर्थः; । तस्मात्पुरुषेण पुण्यकर्मैव कर्तव्यमिति तात्पर्यम् । वसन्ततिलका वृत्तम् ॥

पुरुषस्य कर्तव्याकर्तव्ये प्रश्नोत्तराभ्यामाह—

**को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगमः**
**का हानिः [2]समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ॥**
**कः शूरो विजितेन्द्रियः प्रियतमा काऽनुव्रता किं धनं**
**विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ १०३ ॥**

**को लाभ** इति ॥ लाभोऽभीष्टप्राप्तिः कः ? गुणिनां गुणिपुरुषाणां संगमः संगतिः, पुरुषेण गुणवद्भिरेव सङ्गः कर्तव्य इत्यर्थः । असुखं दुःखं किम् ? प्राज्ञेभ्य इतरैर्मूर्खैः संगतिः, पुरुषेण मूर्खैः सह संगतिः कदापि न कार्येत्यर्थः । हानिः का ? समयस्य यस्मिन्काले यदवश्यं कर्तव्यं तस्य कालस्य च्युतिरतिवाहनम्, पुरुषेण समये समये दत्तावधानेन भाव्यमित्यर्थः । निपुणता का ? धर्मस्य तत्त्वे रहस्ये रतिः प्रीतिः । सर्वदा पुरुषेण धर्माचरणमेव कर्तव्यं नाधर्माचरणमित्यर्थः । शूरः कः ? विजितानीन्द्रियाणि येन स तथाविधः । पुरुषेण जितेन्द्रि-

---

पाठा०–१ सर्वो जनः स्वजनतामुपयाति. २ समये च्युति°.

येण भाव्यमित्यर्थः। प्रियतमा अतिप्रिया स्त्री का? अनुपत्यनुरोध एव व्रतं नियमो यस्याः सा, सानुकूलायाः स्त्रियः संग्रहः कर्तव्यो नाननुकूलाया इत्यर्थः; धनं किम्? विद्या शास्त्राद्यभ्यासः, पुरुषेण सदा शास्त्राभ्यास एव कर्तव्य इत्यर्थः; सुखं किम्? अप्रवासगमनं प्रवासगमनस्याभावः, प्रवासगमनं यथा न स्यात्तथा पुरुषेण स्थेयमित्यर्थः। राज्यं किम्? आज्ञैव फलं लाभो यस्य तदेव। येन राज्येनाज्ञा सफला भवेत्तादृशं राज्यं कर्तव्यमित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥

'विवेकिपुरुषस्य द्वे गती भवतः' इति मालतीकुसुमदृष्टान्तपूर्वकमाह—

**मालतीकुसुमस्येव द्वे गतीह मनस्विनः।**
**मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा॥ १०४॥**

**मालतीति**॥ मालत्या जातिलतायाः कुसुमं पुष्पं तस्येव मनस्विनो विवेकिनः पुरुषस्य इह संसारे द्वे गती दशे। 'गतिः स्त्री मार्गदशयोः' इति मेदिनी। भवतः। कथम्? यथा तेन कुसुमेन सर्वलोकस्य मूर्ध्नि मस्तके स्थीयते, वा अथवा वनेऽरण्य एव शीर्यते शीर्णं भूयते, तद्वन्मनस्विनो गृहे लोकमान्या वने अरण्यवासिनो वा भवन्तीत्यर्थः। अनुष्टुब् वृत्तम्॥

पृथिव्यां सुजनस्थितेर्दौर्लभ्यमाह—

**अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः॥**
**परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा॥ १०५॥**

**अप्रियेति**॥ न प्रियाणि मनःसंतोषकराणि अप्रियाणि च तानि वचनानि तैर्दरिद्रा हीनास्तैः, प्रियवचनैर्हितकारकवचनैराढ्याः पूर्णास्तैः, स्वदाराभिः स्वकीयस्त्रियैव परितुष्टाः संतुष्टास्तैः, परेषां परिवादो निन्दा तस्याः सकाशान्निवृत्ताः पराङ्मुखास्तैः, एतादृशैः पुरुषैर्वसुधा पृथ्वी क्वचित्क्वचिन्मण्डिताऽलङ्कृतास्ति, एवंविधाः पुरुषास्त्वतिदुर्लभा इति भावः। आर्या वृत्तम्॥

'धैर्यावलम्बिनः पुरुषस्य धैर्यं नाशयितुं कोऽपि न शक्नोति' इत्यग्निदृष्टान्तपूर्वकमाह—

**कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्॥**
**अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव॥ १०६॥**

**कदर्थितस्येति** ॥ कदर्थितस्याप्यतिदुःखितस्यापि धैर्येण धीरतया वृत्तिर्वर्तनं यस्य तस्य धैर्यावलम्बिनः पुरुषस्य धैर्यरूपो यो गुणस्तं प्रमार्ष्टुं नाशयितुं कैरपि न शक्यते । तत्र दृष्टान्तमाह—**अधोमुखस्येति** । अधो मुखं यस्य तस्य कृतस्य, अधोमुखीकृतस्येति यावत्; वह्नेरग्नेः शिखा ज्वाला कदाचिदेव कदाप्यधो न याति, किं तूर्ध्वमेव गच्छति; तस्माद्धीरो जनो दुःखितोऽपि धैर्यं न त्यजतीति भावः । उपजातिर्वृत्तम् ॥

'धीरः पुरुषः सर्वं जगद्वशीकरोति' इत्याह—

**कान्ताकटाक्षविशिखा न लुनन्ति[1] यस्य**
**चित्तं न निर्दहति कोपकृशानुतापः ॥**
**कर्षन्ति भूरिविषयाश्च न लोभपाशा**
**लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ १०७ ॥**

**कान्ताकटाक्षेति** ॥ यस्य पुरुषस्य चित्तमन्तःकरणं कान्तायाः स्त्रियाः कटाक्षा अपाङ्गदर्शनानि तान्येव विशिखा बाणास्ते न लुनन्ति न छिन्दन्ति, तथा तस्य चित्तं कोपः क्रोध एव कृशानुरग्निस्तस्य तापः संतापो न निर्दहति न भस्मीकरोति, तथा भूरि बहवो विषया लोभ एव पाशा बन्धनानि यस्य चित्तं न कर्षन्ति नाकर्षन्ति स धीरो जनः कृत्स्नं सर्वमिदं लोकत्रयं जयति वशीकरोति । अनेन कामादयः पुरुषेण त्याज्या इति सूचितम् । वसन्ततिलका वृत्तम् ॥

'एक एव शूरः पुरुषः सर्वं जगज्जयति' इति सूर्यदृष्टान्तपूर्वकं दर्शयति—

**एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ॥**
**क्रियते भास्करेणैव स्फारस्फुरिततेजसा ॥ १०८ ॥**

**एकेनेति** ॥ स्फारं विस्तीर्णं स्फुरितं देदीप्यमानं तेजो यस्य तेन भास्करेण सूर्येणैवैकेनाद्वितीयेन शूरेण वीरपुरुषेण महीतलं पृथ्वीतलं पादेन चरणेन, पक्षे—पादैः किरणैश्च, आक्रान्तं व्याप्तं क्रियते; यथा सूर्यः स्वपादैः सर्वं जगद्व्याप्तं करोति तथा शूरः पुरुषः स्वपादेनाक्रान्तं करोतीति भावः । अनुष्टुप् वृत्तम् ॥

---

**पाठा०**—१ खनन्ति.

'लोकवल्लभशीलवतः पुरुषस्य सर्वेऽप्यनुकूला भवन्ति' इत्याह—

**वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-**
**न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ॥**
**व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते**
**यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ १०९ ॥**

वह्निरिति ॥ यस्य पुरुषस्याङ्गे शरीरे अखिललोकानां वल्लभतममतिशयेन प्रियं शीलं सद्वर्तनं समुन्मीलत्युज्जृम्भते, तस्य वह्निरग्निरुष्णस्वभावोऽपि जलायते जलमिवाचरति, जलवच्छीतलो भवतीत्यर्थः । 'कर्तुः क्यङ्' (पा. ३।१।११) इत्याचारार्थे क्यङ्, सलोपश्च । एवमुत्तरत्रापि बोध्यम् । तथा जलनिधिः समुद्रो दुष्पारोऽपि कुल्यायते कुल्याऽल्पा सरित्तद्वदाचरति, दुस्तरोऽपि सुतरो भवतीत्यर्थः । तत्क्षणात्क्षणमात्रान्मेरुपर्वतः स्वल्पशिलायते सुष्ठु अल्पा या शिला तद्वदाचरति, महानपि पर्वतः स्वल्पपाषाणतुल्यो भवतीत्यर्थः । मृगपतिः सिंहोऽतिक्रूरोऽपि सद्यः कुरङ्गायते कुरङ्गो हरिणस्तद्वदाचरति, क्रौर्यं त्यजतीत्यर्थः; सर्पोऽतिक्रूरोऽपि माल्यगुणायते मालागुण इवाचरति, स्वक्रौर्यं त्यजतीत्यर्थः । विषरसः पीयूषवर्षायते पीयूषरसोऽमृतरसः, तस्य वर्षो वर्षणं तद्वदाचरति, स्वीयं मारकं गुणं त्यजतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

'तेजस्विनः पुरुषाः स्वीयां प्रतिज्ञां न त्यजन्ति' इति स्वजननीदृष्टान्तपूर्वकमाह—

**लज्जा[1]गुणौघजननीं जननी[2]मिव स्वा-**
**मत्यन्तशुद्धहृदया[3]मनुवर्तमानाम् ॥**
**तेजस्विनः सुखमसूनपि संत्यजन्ति**
**सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ११० ॥**

**इति श्रीमद्राजर्षिप्रवरभर्तृहरिकृतं नीतिशतकं संपूर्णम् ॥**

लज्जेति ॥ सत्यमेव व्रतं तस्मिन्व्यसनमासक्तिर्येषां ते एवंविधास्तेजस्विनः प्रभाववन्तः पुरुषाः सुखं यथा स्यात्तथा असून् प्राणानपि त्यजन्ति । पुनः स्वां स्वकीयां जननीं मातरमिव प्रतिज्ञां न त्यजन्ति । कीदृशीं प्रतिज्ञां मातरं च?

---

पाठा०–१ लज्जां गुणौघ°. २ जननीमिवार्या. ३ °मनुवर्तमानाः.

असत्कर्मणः प्रवृत्तिलक्षणलज्जारूपो यो गुणौघो गुणप्रवाहस्तस्य जननीमुत्पादिकाम् । पुनः कीदृशीम् ? अत्यन्तं शुद्धं हृदयमन्तःकरणं यस्यां यस्या वा ताम् । पुनः कीदृशीम् ? अनुवर्तमानां अनुलक्ष्य वर्तमानाम् । अनेन सत्यभाषिणा पुंसा प्राणा अपि त्याज्याः, परंतु स्वीयप्रतिज्ञा न त्याज्येति सूचितम् । वसन्ततिलका वृत्तम् ॥

नीत्याख्यशतकव्याख्यामर्थद्योतनिकाभिधाम् ।
कृष्णोऽहं कृतवांस्तेन प्रीयतां विश्वसृड्विधिः ॥

इति कृष्णसूरिविरचिताऽर्थद्योतनिकाभिधा टीका संपूर्णा ॥

नीतिशतकं संपूर्णम् ।

## परिशिष्टम्[1]

### अत्रापठितभर्तृहरिकृतनीतिश्लोकसंग्रहः

*

अविरलमदजलनिवहं भ्रमरकुलानीकसेवितकपोलम् ।
अभिमतफलदातारं कामेशं गणपतिं वन्दे ॥ १ ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म तनुते ॥ २ ॥

पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ३ ॥

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्वरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्छेदयं-
श्चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ ४ ॥

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं चाङ्गीकृतमुत्सृजन्न इव श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुनि सतामेतद्धि गोत्रव्रतम् ॥ ५ ॥

अयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातः शंभुमूर्धावतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ? ॥ ६ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं निजपृष्ठभागे ।
अम्भोनिधिर्वहति दुःसहवाडवाग्निं
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ७ ॥

वैराग्यं संश्रयत्येको नीतौ भ्रमति चापरः ।
शृङ्गारे रमते कश्चिद्भुवि भेदः परस्परम् ॥ ८ ॥

---

1 येषां सौजन्येनेमे श्लोकाः संगृहीतास्ते **प्रो. दामोदर धर्मानन्द कोसंबी-महोदयाः** सर्वथाधमर्णयन्त्यस्मानिति सप्रश्रयं निवेद्यते-संपादकेन ।

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ९ ॥

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।
तदपि तत् क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ १० ॥

अङ्गेन गात्रं नयनेन वक्त्रं न्यायेन राज्यं लवणेन भोज्यम् ।
धर्मेण हीनं खलु जीवितं च न राजते चन्द्रमसा विना निशा ॥ ११ ॥

अज्ञं कर्माणि लिम्पन्ति तज्ज्ञं कर्म न लिम्पति ।
लिप्यते रसनैवैका सर्पिषा करवद् यथा ॥ १२ ॥

ज्ञाता ज्ञातुर्युवतिषु युवा वाग्मिनां तत्त्ववेत्ता
अज्ञेष्वज्ञो गुणिषु गुणवान् पण्डिते पण्डितोऽसौ
दीने दीनः सुखिनि सुखवान् भोगिनो भोगिभावः ।
धन्यः सोऽयं भवति भुवने योऽवधूतेऽवधूतः ॥ १३ ॥

अपि सर्वविदो न राजते वचनं श्रोतरि बोधवर्जिते ।
अपि भर्तरि नष्टलोचने विफलः किं न कलत्रविभ्रमः ॥ १४ ॥

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥ १५ ॥

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थले कमलरोपणं सुचिरमूषरे वर्षणम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृत-
स्तदन्धमुखमण्डनं यदबुधे जने भाषितम् ॥ १६ ॥

अर्था हसन्त्युचितदानविहीनचित्तं
भूमिर्नरं च मम भूमिरिति ब्रुवाणम् ।
जारा हसन्ति तनयानुपलालयन्तं
मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ १७ ॥

अविदितशपसविशेषा वाणी निःसरति वक्त्रतो येषाम् ।
गुदवदनविवरभेदो रदनैरनुमीयते तेषाम् ॥ १८ ॥

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १९ ॥

उत्तिष्ठ क्षणमेकमुद्वह सखे! दारिद्र्यभारं मम
श्रान्तस्तावदहं क्षणान्मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ २० ॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरुक्तं भाषणं सज्जनानाम् ॥ २१ ॥

उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति नोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ २२ ॥

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ २३ ॥

कृशोऽपि धन्यः सुजनः सुबुद्धिमान् परोपकारार्थमिहार्थसंपदः ।
महापथावस्थितपादपः शुभः कृशोऽपि काष्ठाय फलान्वितः किमु ॥ २४ ॥

जवो हि सप्तेः परमं विभूषणं त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य विद्यैव मुनेस्तथा क्षमा सर्वस्य शीलं हि परं विभूषणम् ॥ २५ ॥

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २६ ॥

अवज्ञानाद्राज्ञां भवति नृपहीनः परिचरं
जनस्तत्प्राधान्याद्भवति न समीपे बुधजनः ।
बुधैस्त्यक्ते राज्ञो भवति न च नीतिर्गुणवती
विनष्टायां नीत्यां सकलमपि शुष्येन्नृपकुलम् ॥ २७ ॥



## परिशिष्टगतापठितनीतिश्लोकानुक्रमणिका

# अथ नीतिशतकश्लोकानुक्रमणिका



इति नीतिशतकश्लोकानुक्रमणिका

श्रीः ।

भर्तृहरिविरचितं

# श्रृंगारशतकम् ।

महाबलोपाह्वकृष्णशास्त्रिविरचितया
व्याख्यया समलंकृतम् ।

षष्ठं संस्करणम् ।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी,

इत्येतैः स्वीये निर्णयसागरमुद्रणयन्त्रालये मुद्रयित्वा
प्रकाशितम् ।

शाकः १८५८, सन १९३६.

मूल्यं [illegible] आणकाः ।

श्रीः ।

भर्तृहरिविरचितं

# श्रृंगारशतकम् ।

महाबलोपाह्वकृष्णशास्त्रिविरचितया

व्याख्यया समलंकृतम् ।

षष्ठं संस्करणम् ।

तच्च

**मुम्बय्यां**

पाण्डुरङ्ग जावजी,

इत्येतैः स्वीये निर्णयसागरमुद्रणयन्त्रालये मुद्रयित्वा

प्रकाशितम् ।

शाकः १८५८, सन १९३६.

मूल्यं ५ आणकाः ।



॥ श्रीः ॥

# विद्वदभ्यर्थना ।



स्वस्तिश्रीमत्समस्तजगदाधारपरमकरुणावतारस्य घनश्यामकल्पविटपि-विशङ्कटविटपतटप्रकटप्रोत्कटसुमनःसमानमृदुलभक्तावतंसमनःसिंहासन-कृताधिवासनस्य भगवतो नारायणस्य लीलातः प्रवर्तमानायामस्यां पञ्चम्यां भूतसृष्टौ समस्तकविकलाकोविदस्याप्यवगतसकलशास्त्रस्य निजयशःसुधाध-वलितविशुद्धविज्ञानविलसितविबुधजनमानसमन्दिरस्य नितान्तशौर्यौदार्य-धैर्यवीर्यगाम्भीर्यसौशील्यादिगुणमणिगणाभरणविभूषितकलेवरस्य, पवित्र-चरित्रपवित्रीकृतधरित्रीवलयस्य, सकलावनीशवन्दितचरणस्य, दिगन्तरलु-ठत्कीर्ते राजर्षिप्रवरस्य, श्रीमतो भर्तृहरिमहीपालस्य, निजानुभवपुरःसरं संसारतत्त्वार्थसारोपदेशदेशिकीभूतमिदं शतकत्रयात्मकं नीतिशृङ्गारवै-राग्यविषयनिबद्धं काव्यं समस्तजनकल्याणाय संप्रसार्यमाणं विबुधजनचे-तोमहानन्दं समुत्पादयतीति हि तावद्भूयोभूयो जोघुष्यत एव सरलबुद्धि-भिर्विद्वद्भिः ॥

तदेतत्काव्यमनन्वितटीकार्थमस्ताव्यस्तनिर्गलितनिरर्गलविषयमासीत् । तादृशाव्यवस्थया ग्रन्थदोषं पर्यालोच्य सहृदयसूचनया प्रेरितोऽहं गोदावरी-तीरविलसच्छ्रीनासिकक्षेत्रनिवासिभिर्महाबलोपनामधेयैः कृष्णशास्त्रिभिर्न-वीनां काव्यार्थानुगतां टीकां कारयित्वा प्राचीनलिखितपञ्चषट्पुस्तकानि मेलयित्वा ग्रन्थं शोधयित्वा सुविमलकीलकाक्षरैरङ्कित्वा विदुषामग्रतः प्रसि-द्धिमनैषम् । तद्धि सुधियो मदीयं प्रयासमभिन्दनेन कृतार्थयन्त्वित्याशासे—



## अथ भर्तृहरिकृतं

# शृङ्गारशतकं प्रारभ्यते ।

श्रीमद्राजर्षिप्रवरो भर्तृहरिः शृङ्गाररससेवनमपि नीतिपूर्वकमेव कर्तव्यं न तद्विरुद्धमिति सूचयन् प्रथमं नीतिज्ञानाय नीतिशतकं कृत्वा ततः शृङ्गाररसस्य परिणामे वैराग्यजनकत्वात्कचिद्धेयत्वेन कचिदुपादेयत्वेनादौ तं वर्णयित्वा पश्चाद्वैराग्यं वर्णयिष्यामीति मनसि निधाय शृङ्गारशतकं प्रारिप्सुस्तत्र कामस्य प्राधान्यादादौ तन्नमस्कारात्मकं मङ्गलमाचरति—

**शंभुस्वयंभुहरयो हरिणेक्षणानां येनाक्रियंत सततं गृहकर्मदासाः ।**
**वाचामगोचरचरित्रविचित्रिताय तस्मै नमो भगवते कुसुमायुधाय ॥ १ ॥**

शंभुस्वयंभ्विति ॥ शंभुः शिवश्च स्वयंभूर्ब्रह्मा च हरिर्विष्णुश्च ते शंभुस्वयंभुहरयः कर्तुमकर्तुमन्यथाकर्तुं शक्ता अपि येन मदनेन हरिणस्य ईक्षणे नेत्रे इव ईक्षणे यासां तासां स्त्रीणां गृहकर्मणि दासा दासवत्सेवाकारिणः सततं निरन्तरमक्रियन्त कृताः तस्मै अत एव वाचां वाणीनां न गोचराणि अविषयभूतानि । वाचा अनुच्चारणीयानीति यावत् । चरित्राणि तैर्विचित्रो लोकविलक्षणचरित्रकर्ता तस्मै अत एव भगवते ऐश्वर्यवते कुसुममेवायुधं शस्त्रं यस्य तस्मै कामाय नमोऽस्तु । अत्र कस्मिंश्चित्पुस्तके "चूडोत्तंसितचारुचन्द्र" इति श्लोकः प्रथमं पठितः । परंतु बहुपुस्तकेष्वदृष्टत्वादयोग्यत्वाच्च न संगृहीतः किंत्वयमेव योग्यत्वादन्यबहुपुस्तकेषु दृष्टत्वाच्च लिखित इति । वसन्ततिलका वृत्तम् । "उक्ता वसन्ततिलका तभजा जगौ गः" इति तल्लक्षणात् ॥

यावद्भाग्योदयोऽस्ति तावच्छृङ्गारोद्बोधकं गृहादिकं स्थिरं भवति, तद्वैपरीत्ये तत्सर्वं नष्टं भवतीति नष्टतन्तुकमुक्ताजालदृष्टान्तपुरःसरं तदनित्यत्वं वर्णयति—

**शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला**
**लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ।**
**विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं**
**मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥ २ ॥**

**शुभ्रमिति** ॥ शुभ्रं सुधालेपादिना श्वेतं सद्म गृहम्, विभ्रमो विलासस्तत्सहिताः युवतयः स्त्रियः, श्वेतं शुभ्रं यदातपत्रं छत्रं तेनोज्ज्वला देदीप्यमाना

लक्ष्मीः संपदिति एतत्सर्वं शुभे पुण्ये कर्मणि स्फीते पुष्टे सति स्थिरमिवाचल-मिव लोकैरनुभूयते । तस्मिन्पुण्ये विच्छिन्ने नष्टे सति नितरां अनङ्गः कामस्त-ज्जनिता या कलहक्रीडा तया त्रुटन्तस्तन्तवो यस्यात एव भ्रश्यन्नष्टं मुक्ताजाल-मिव दिशो दशदिशो झटिति शीघ्रं याति नश्यतीति यावदिति सर्वैर्दृश्यतां प्रत्यक्षमनुभूयताम् । शार्दूलविक्रीडितं वृत्तम् । "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति तल्लक्षणात् ॥

यावत्स्त्रीकटाक्षैर्विवेकी पुरुषो न ताड्यते तावत्तस्य हृदि विवेकः स्फुरतीति स्त्रीणां विवेकध्वंसकत्वं वर्णयति—

**तावदेव कृतिनां हृदि स्फुरत्येष निर्मलविवेकदीपकः ।**
**यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनाञ्चलैः ॥ ३ ॥**

**तावदिति** ॥ कुरङ्गचक्षुषां हरिणीदृशां चपलानि चञ्चलानि लोचनानि नेत्राणि तान्येवाञ्चलाः प्रान्तभागास्तैर्यावन्न ताड्यते तावदेव कृतिनां विवेकि-पुरुषाणां हृदि अन्तःकरणे एष निर्मलः कामादिमलरहितो विवेकदीपकः स्फुरति । अनेन स्त्रियाः कटाक्षेण विवेकिनामपि विवेकभङ्गो भवतीति सूचितम् । रथोद्धता वृत्तम् । "रो नराविह रथोद्धता लगौ" इति तल्लक्षणात् ॥

स्त्रियं दृष्ट्वा निर्विकारमनसो ये ते पुरुषा जगति धन्या इत्याह—

**धन्यास्त एव चपलायतलोचनानां**
**तारुण्यदर्पघनपीनपयोधराणाम् ।**
**क्षामोदरोपरि लसत्त्रिवलीलतानां**
**दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥ ४ ॥**

**धन्यास्त इति** ॥ चपले चञ्चले आयते विस्तृते लोचने नेत्रे यासाम् । तारुण्यस्य यौवनस्य दर्पो गर्वो यासां ताश्च । घनौ निरन्तरौ पीनौ पुष्टौ पयोधरौ स्तनौ यासां ताश्च ताश्च तासाम् । क्षामं कृशं यदुदरं तस्योपरि लसन्ती त्रिवलीलता यासां तासां स्त्रीणामाकृतिमाकारं दृष्ट्वा येषां पुरुषाणां मनो विकृतिं विकारं नैति न प्राप्नोति त एव धन्याः पुण्यवन्तः । "सुकृती पुण्यवान्धन्यः" इत्यमरः । स्युः । अनेन स्त्रियौ दर्शनमात्रेणावश्यं मनो-विकृतिं जनयन्तीति व्यज्यते । वसन्ततिलका वृत्तम् ॥

स्त्रीसङ्गत्यागवार्ताकारिणो जना बहवः सन्ति परंतु तज्जघनत्यागी दुर्लभ इत्याह—

**भवति वचसि सङ्गत्यागमुद्दिश्य वार्ता**
**श्रुतमुखरमुखानां केवलं पण्डितानाम् ।**

**जघनमरुणरत्नग्रन्थिकाञ्चीकलापं**
**कुवलयनयनानां को विहातुं समर्थः ॥ ५ ॥**

**भवतीति** ॥ श्रुतेन अनेकविधश्रवणेन मुखरं सशब्दं मुखमाननं येषाम्। बहुजल्पाकानामिति यावत् । तेषां पण्डितानां सङ्गत्यागं स्त्रीसङ्गत्यागमुद्दिश्य वचस्येव केवलं वार्ता भवति वार्तामात्रमेव भवति न तु तथाचरणमित्यर्थः । किंतु कुवलयं कमलपत्रं तत्सदृशे नेत्रे यासां तासां अरुणै रक्तवर्णै रत्नैर्ग्रन्थि-ग्रथनं यस्मिन्नेतादृशः काञ्चीकलापः कटिभूषणं यस्मिंस्तत् जघनं विहातुं त्यक्तुं कः समर्थः । न कोऽपीत्यर्थः । स्त्रीसङ्गत्यागवार्ता वाण्या कर्तुं बहवः पण्डिताः सन्ति परंतु तत्त्यागं मनसा कर्तुं कोऽपि न समर्थ इति भावः । मालिनी वृत्तम् । "ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात् ॥

गजादिगर्वहरणे केचिच्छूराः सन्ति परंतु दुर्जयं कामं जेतुं समर्था अतिदुर्लभा इत्याह—

**मत्तेभकुम्भदलने भुवि सन्ति शूराः**
**केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ।**
**किं तु ब्रवीमि बलिनां पुरतः प्रसह्य**
**कन्दर्पदर्पदलने विरला मनुष्याः ॥ ६ ॥**

**मत्तेभेति** ॥ मत्तो मदोन्मत्तो य इभो गजस्तस्य कुम्भो गण्डस्थलं तस्य दलने विदारणे शूरा भुवि सन्ति, केचित्प्रचण्डोऽत्यन्तकोपनः । "चण्डस्त्व-त्यन्तकोपनः" इत्यमरः । यो मृगराजः सिंहस्तस्य वधे हननेऽपि दक्षाः समर्थाः सन्ति किंतु परंतु कन्दर्पः कामस्तस्य दर्पो गर्वस्तस्य दलने मनुष्या विरलाः सन्तीति बलिनां बलिष्ठानां पुरतोऽग्रभागे प्रसह्य हठात् । "प्रसह्य तु हठार्थ-कम्" इत्यमरः । अहं ब्रवीमि । अत्याग्रहपूर्वकं ब्रवीमीत्यर्थः । वसन्ततिलका वृत्तम् ॥

स्त्रियः स्मितादिभावैः पुरुषमवश्यं बध्नन्तीत्याह—

**स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः ।**
**वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः ॥ ७ ॥**

**स्मितेनेति** ॥ स्त्रियः स्मितेनेषद्धास्येन, भावेन हस्ताद्यवयवचालनेन, लज्जया मुखादिगोपनरूपया, भिया कदाचिद्भीत्या, पराङ्मुखैः पराचीनमुखैः, अर्धकटाक्षवीक्षणैरर्धोन्मीलितापाङ्गदर्शनैः, वचोभिश्चारुभाषणैः, ईर्ष्या परो-त्कर्षासहिष्णुत्वं तेन कलहस्तेन, लीलया विलासेन, एतैः समस्तभावैः सर्व-

चेष्टाभिः । "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः । पुरुषस्य बन्धनं खलु निश्चयेन भवन्ति । वंशस्थं वृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ इति तल्लक्षणात् ॥

स्त्रियः कस्य मनो वशं न कुर्वन्ति, अपि तु सर्वस्यापि कुर्वन्तीत्याह—

**एताश्चलद्वलयसंहतिमेखलोत्थ-**
**झङ्कारनूपुररवाहृतराजहंस्यः ।**
**कुर्वन्ति कस्य न मनो विवशं तरुण्यो**
**वित्रस्तमुग्धहरिणीसदृशाक्षिपातैः ॥ ८ ॥**

**एता इति** ॥ चलन्ति वलयानि कङ्कणानि तेषां संहतिः समूहः मेखला काञ्ची च ताभ्यामुत्थितो झङ्कारः शब्दः नूपुराणां पादभूषणानां रवश्च ताभ्यामाहृता पराभूता राजहंसी याभिस्ताः । कङ्कणकाञ्चीनूपुररवैर्जितराजहंसीशब्दा इत्यर्थः । एतादृश्यस्तरुण्यः वित्रस्ता भयचकिता मुग्धा सुंदरी या हरिणी तत्सदृशानामक्ष्णां नेत्राणां पातैश्चालनैः कस्य पुरुषस्य मनोऽन्तःकरणं विवशं व्याकुलं न कुर्वन्ति । अपि तु सर्वस्यापि कुर्वन्तीत्यर्थः । स्त्रियः पुरुषं सर्वथा वशीकुर्वन्तीति भावः । वसन्ततिलका वृत्तम् ॥

योषिदेव सुखदुःखैकहेतुर्नान्यत्किमपीत्याह—

**सत्यं जना वच्मि न पक्षपाताल्लोकेषु सर्वेष्वतितथ्यमेतत् ।**
**नान्यन्मनोहारि नितम्बिनीभ्यो दुःखस्य हेतुर्न हि कश्चिदन्यः ॥ ९ ॥**

**सत्यमिति** ॥ हे जनाः, अहं सत्यं वच्मि । पक्षपातान्न । सर्वेषु लोकेषु एतदेवातितथ्यम् । किं तत् । नितम्बिनीभ्यः स्त्रीभ्योऽन्यन्मनोहारि मनसः आकर्षकम् । मनःसंतोषकरमिति यावत् । नास्ति । अन्यो योषिदतिरिक्तः कश्चिदपि दुःखस्य हेतुः कारणं नहि । असति वैराग्ये स्त्रीभ्योऽन्यन्मनोरमं नास्ति । वैराग्यपूर्वकविचारे क्रियमाणे दुःखहेतुरन्यन्नास्तीति भावः । इन्द्रवज्रा वृत्तम् । "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति तल्लक्षणात् ॥

स्त्रीणां स्वभावसिद्धान् कटाक्षादीन् दृष्ट्वा स्वीयत्वेन मत्वा मूढपुरुषो मोहितो भवतीति भ्रमरदृष्टान्तपूर्वकमाह—

**लीलावतीनां सहजाः स्वभावास्त एव मूढस्य हृदि स्फुरन्ति ।**
**रागो नलिन्या हि निसर्गसिद्धस्तत्र भ्रमत्येव मुधा षडङ्घ्रिः ॥ १० ॥**

**लीलावतीनामिति** ॥ लीलावतीनां विलासवतीनां स्त्रीणां सहजाः सहो-

त्पन्ना ये स्वभावाः कटाक्षक्षेपादिधर्माः । "धर्मः स्वभाव आत्मा स्यात्" इति हलायुधः । त एव मूढस्याज्ञस्य हृदि अन्तःकरणे स्फुरन्ति प्रकाशन्ते । तत्र दृष्टान्तः । हि यस्मात् नलिन्या रक्तोत्पलिन्याः रागो लोहितादिर्निसर्गसिद्धः स्वभावसिद्धोऽस्ति, तत्र तस्यां नलिन्यां षडङ्घ्रिर्भ्रमरो मुधा व्यर्थमेव भ्रमते स्वादेश्यकं रागं मत्वा भ्रमरो व्यर्थमेव भ्रमतीत्यर्थः । वृत्तं पूर्वोक्तमेव ॥

स्त्र्यभिलाष एव प्रणामादिहेतुर्भवतीत्याह—

**सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढद्रुमे**
**गङ्गाधौतशिलातले हिमवतः स्थाने स्थिते श्रेयसि ।**
**कः कुर्वीत शिरः प्रणाममलिनं म्लानं मनस्वी जनो**
**यद्वित्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥ ११ ॥**

**सिद्धाध्यासितेति** ॥ यद्यदि वित्रस्तो भयचकितो यः कुरङ्गशावो हरिण-शिशुस्तत्सदृशे नयने यासां ताः स्त्रियः स्मरास्त्रं कामास्त्रभूता न स्युस्तर्हि सिद्धैरध्यासिता अधिष्ठिताः कन्दरा गुहा यस्मिन् । हरः शिवस्तस्य वृषो नन्दी तस्य स्कन्धाभ्यामवगाढा घर्षिता द्रुमा वृक्षा यस्मिन् । गङ्गया धौतं शिलातलं यस्मिन् । एतादृशे श्रेयसि श्रेयःसाधनभूते । निरुपद्रवे इति यावत् । हिमवतः स्थाने स्थिते सति को मनस्वी जनः शिरः मस्तकं प्रणामेन मलि-नमत एव म्लानं कुर्वीत । अपितु न कोऽपीत्यर्थः । प्रणाममालिन्यपूर्वकशिरो-म्लानीकरणे स्त्रिय एव हेतवो नान्य इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

अस्मिन् संसारे परोपकारादन्यत्पुण्यमधिकं नास्ति तथा कमलनयनाभ्यः स्त्रीभ्योऽन्यद्रम्यं नास्तीत्याह—

**भवन्तो वेदान्तप्रणिहितधियामाप्तगुरवो**
**विचित्रालापानां वयमपि कवीनामनुचराः ।**
**तथाप्येतद्ब्रूमो नहि परहितात्पुण्यमधिकं**
**न चास्मिन्संसारे कुवलयदृशो रम्यमपरम् ॥ १२ ॥**

**भवन्त इति** ॥ भवन्तो वेदान्ते प्रणिहिता धृता धीर्बुद्धिर्यैस्तेषामाप्ताश्च ते गुरवः शिक्षकाः । "मन्त्रगुरवः" इत्यपि पाठः । स्थ, वयमपि विचित्रा आ-लापा भाषणानि येषां तेषां कवीनामनुचरा अनुवर्तिनः स्मः । तथाप्यस्मि-न्संसारे परहितात्परोपकारादधिकं पुण्यं नहि नास्ति, तथा कुवलयदृशः कमलनयनायाः स्त्रिया अपरमन्यद्रम्यं रमणीयं वस्तु नास्तीत्येतद्वयं ब्रूमः । शिखरिणी वृत्तम् । "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति ॥

भूधरनितम्बस्य स्त्रीनितम्बस्य चेत्युभयोरपि सुखहेतुत्वात्तयोर्मध्ये आत्यन्तिकहेतुत्वं कस्येत्याशयेन युग्मेन पृच्छति—

**मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ।**
**सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरनितम्बिनीनाम् ॥ १३ ॥**

**मात्सर्यमिति** ॥ आर्याः कार्याकार्यविचारनिपुणाः विद्वांसः, मात्सर्यं परोत्कर्षासहनमुत्सार्य त्यक्त्वा कार्यमवश्यकर्तव्यं विचार्य समर्यादं शास्त्रीयमर्यादानुल्लङ्घनपूर्वकमिदं वक्ष्यमाणं वदन्तु कथयन्तु । इदं किम् । लोकैर्भूधराणां पर्वतानां नितम्बाः कटकाः "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः । सेव्याः सेवनीयाः किमु, उताथवा स्मरः कामः स्मेरं ईषद्धास्यं तद्युक्तानां नितम्बिनीनां स्त्रीणां नितम्बाः कटिपुरोभागाः सेव्या इति । उपजातिर्वृत्तम् ॥

अधिकारभेदेनोभयोरपि सेव्यत्वमित्युत्तरमाह—

**किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-**
**र्द्वयमपि पुरुषाणां सर्वदा सेवनीयम् ।**
**अभिनवमदलीलालालसं सुन्दरीणां**
**स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ १४ ॥**

**किमिहेति** ॥ इह लोके बहुभिरनेकैर्युक्त्या शून्या रहितास्तैस्तैः प्रलापैरनर्थकवचनैः किम् । "उक्तैः" इति पाठे उक्तैः कथितैरित्यर्थः । पुरुषाणां पुरुषैः द्वयमपि द्वयमेव सर्वदा सेवनीयं सेव्यम् । द्वयं किम् । अभिनवो यो मदस्तारुण्यगर्वस्तत्संबन्धिनी लीला भ्रुकुट्यादिचालनं तेन लालसमौत्सुक्यं यस्मिन्, स्तनयोः भरोऽतिशयस्तेन परिखिन्नं परिक्लिष्टं, सुन्दरीणां यौवनं तारुण्यं वा अथवा वनमरण्यं वेति । असति वैराग्ये यौवनवत्यः स्त्रियः सेव्याः । सति तु तस्मिन्वनं सेव्यम् । अवस्थाभेदेनोभयोरपि सुखहेतुत्वादिति भावः । मालिनी वृत्तम् ॥

यस्तरुणीभुजालिङ्गितः सन् रात्रौ शेते स धन्य इत्याह—

**मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे**
**कान्तापयोधरतटे रसखेदखिन्नः ।**
**वक्षो निधाय भुजपञ्जरमध्यवर्ती**
**धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ १५ ॥**

**मत्तेभेति** ॥ यः पुरुषः रसः शृङ्गारादिस्तत्सेवनजन्यो यः खेदस्तेन खिन्नः श्रान्तः सन् मत्तो मदोन्मत्तो य इभो गजस्तस्य कुम्भो गण्डस्थलं तद्वत्परि-

णाहिनि विस्तीर्णे, कुङ्कुमेनार्द्रे, कान्तायाः पयोधरतटे स्तनतटे वक्ष उरो निधाय अर्थात्प्रिया एव भुजावेव पञ्जरस्तन्मध्यवर्ती सन् क्षणं क्षणमात्रं लब्धा निद्रा येन एतादृशः सन् क्षपां रात्रिं क्षपयति नयति स धन्यः । अस्मिन्संसारे स्त्र्यालिङ्गनपूर्वकं शयनमेवात्यन्तसुखहेतुरिति भावः । वसन्ततिलका वृत्तम् ॥

निरतिशयरूपवतीं स्त्रियं दृष्ट्वा मोहितस्य तामलभमानस्य कस्यचित्पुरुषस्य तद्दौर्लभ्यसूचिकामुक्तिमाह—

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-**
**रनाविद्धं रत्नं मधुनवमनास्वादितरसम् ।**
**अखण्डं पुण्यानां फलमिव भवद्रूपमनघं**
**न जाने भोक्तारं कमिह समुपस्थास्यत इति ॥ १६ ॥**

**अनाघ्रातमिति** ॥ न आघ्रातं घ्राणविषयीकृतं पुष्पं कुसुमम् । न केनाप्यास्वादितमित्यर्थः । कररुहैर्नखैरलूनमच्छिन्नं किसलयं पल्लवः केनाप्यस्पृष्टम् । अम्लानमित्यर्थः । "पल्लवोऽस्त्री किसलयम्" इत्यमरः । अनाविद्धं वेधरहितं रत्नम् । तेजसा किंचिदपि न हीनमित्यर्थः । न आस्वादितो रसो यस्य तत् मधुवनं मधुररसवनम् । न केनाप्युपभुक्तमित्यर्थः । पुण्यानामखण्डं फलमिव अनघं दोषरहितं भवत्या रूपम् । "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" । इह संसारे कं भोक्तारं उपस्थास्यते संगमिष्यते मित्रीकरिष्यते वा इत्यहं न जाने । "उपादेवपूजा—" इत्यादिना संगतिकरणे मित्रीकरणे वा आत्मनेपदम् । एतस्य रूपस्य को वा भोक्ता भविष्यतीति नाहं जान इत्यर्थः । शिखरिणी वृत्तम् ॥

तृष्णाया दुर्जयत्वमाह—

**राजंस्तृष्णाम्बुराशेर्न हि जगति गतः कश्चिदेवावसानं**
**कोवार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागः ।**
**गच्छामः सद्म यावद्विकसितनयनेन्दीवरालोकिनीना-**
**माक्रम्याक्रम्य रूपं झटिति न जरया लुप्यते प्रेयसीनाम् ॥ १७ ॥**

**राजन्निति** ॥ हे राजन्, जगति लोके तृष्णारूपो योऽम्बुराशिः समुद्रस्तस्यावसानमन्तम् । पारमिति यावत् । कश्चिदपि नहि गतः । अतः प्रभूतैः प्रचुरैरर्थैः कोवाऽर्थः किं प्रयोजनम् । न किमपीत्यर्थः । प्रभूतेऽर्थे सत्यपि तृष्णाया अशान्तेरिति भावः । तथा स्ववपुषि स्वशरीरे गलिते शिथिलप्राये सति यौवने सानुरागः प्रीतियुक्तो भवति । तृष्णायाः शान्त्यभावादित्यर्थः । "सानुराग"

इत्यत्र पाठान्तराणि त्वनुपयुक्तत्वात्त्यक्तानि। यतो वयं विकसितानि नयनानीन्दीवराणि कमलानीवेन्दीवराणि तैरवलोकयन्ति तासाम्। "नयनेन्दीवर" इत्यत्रापि पाठान्तराण्यनुपयुक्तत्वात्त्यक्तानि। प्रेयसीनां स्त्रीणा रूपं आक्रम्याक्रम्य झटिति जरया यावन्न लुप्यते छिद्यते तावत्तासां सद्म गृहं गच्छाम एव। अनेन वृद्धत्वं प्राप्तस्यापि पुरुषस्य तृष्णाशान्तिर्नैव भवतीति सूचितमिति भावः। स्रग्धरा वृत्तम्। "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति तल्लक्षणात्॥

कामोद्दीपकमेघादिदर्शनेन प्रियाविरहखिन्नानां पथिकानां स्थितिमाह—

**उपरिघनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः।**
**क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व यापयतु॥ १८॥**

**उपरीति**॥ उपर्युरिष्टात् घनं निबिडं घनपटलमभ्रपटलम्, तिर्यक् तिर्यक्प्रदेशे नर्तिता मयूरा येषु ते गिरयः पर्वता अपि सन्ति, क्षितिरपि पृथ्व्यपि कन्दलैर्नवाङ्कुरैर्धवला सुन्दरी। "धवलागवि। वृषश्रेष्ठे पुमान्वाच्यलिङ्गः शुक्ले च सुन्दरे" इति मेदिनी। अस्ति अतः पथिको दृष्टिं क्व यापयतु प्रापयतु। विनोदयत्विति यावत्। तस्मात्प्रेयसीसहवास एव सुखहेतुरिति भावः। आर्यावृत्तम्॥

इह संसारे पण्डितानां द्विधा कालयापनं भवतीत्याह—

**संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां**
**तत्त्वज्ञानामृताम्भःप्लवलुलितधियां यातु कालः कदाचित्।**
**नो चेन्मुग्धाङ्गनानां स्तनजघनघनाभोगसंसर्गिणीनां**
**स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यमानाम्॥ १९॥**

**संसार इति**॥ अस्मिन्नसारे सारांशरहिते, परिणतिः परिणामस्तत्र तरले चञ्चले। विनाशिनीत्यर्थः। संसारे पण्डितानां द्वे गती मार्गौ दशे वा भवतः। "गतिः स्त्री मार्गदशयोः" इति मेदिनी। द्वे के। तत्त्वज्ञानमेवामृताम्भोऽमृतोदकं तस्मिन्प्लवोऽवगाहनम्। "प्लुत" इति पाठेऽपि स एवार्थः। तस्मिन्विषये लुलिता लुठिता धीर्बुद्धिर्येषां तेषां कालो यात्वित्येका गतिः। नोचेत्तत्त्वज्ञानं न चेत् स्तनौ कुचौ जघनं कटिपुरोभागश्च तेषां घनो निबिडो य आभोगः परिपूर्णता तस्य संसर्गो विद्यते यासाम्। "भराभोग" इत्यपि क्वचित्पाठः। तासां मुग्धाङ्गनानां सुन्दरस्त्रीणां स्थूलानि यान्युपस्थानि तान्येव स्थल्यः प्रदेशास्तासु स्थगितः स्थिरो यः करतलस्तस्य स्पर्शस्तस्मिन्लोलस्तृष्णासहितः।

अभिलाषपूर्वक इति यावत् । एवंविध उद्यम उद्योगो येषां तेषाम् । सर्वदाभिलाषपूर्वकनितम्बिन्युपस्थनिहितहस्तानामित्यर्थः । कालो यत्विति द्वितीया गतिः । इह संसारेऽसति तत्त्वज्ञाने सर्वदा नितम्बिनीसेवनं तत्त्वज्ञानवत्सुखजनकमिति तात्पर्यम् । स्रग्धरा वृत्तम् ॥

विद्वानपि पुरुषः स्त्रियं दृष्ट्वा मोहितो भवतीत्याह—

**कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युत्सुकः**
**पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।**
**दृष्ट्वा मुह्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि**
**प्रत्यक्षामसिपुत्रिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥ २० ॥**

**कान्तेति** ॥ अहो इत्याश्चर्ये । विद्वानपि दोषज्ञोऽपि पुरुषः प्रत्यक्षामक्षिगोचरभूतामसिपुत्रिकां प्राणान्तपर्यन्तं वेधकत्वेन छुरिकातुल्यामपि स्त्रियं दृष्ट्वा मुह्यति मोदते च । ततस्तद्विषय उत्सुक उत्कण्ठितः सन् कान्ता मनोहरेति, उत्पललोचना कमललोचनेति, विपुलो विस्तृतः श्रोणीभरः कटिप्रदेशो यस्याः सेति, पीनौ पुष्टावुत्तुङ्गावुन्नतौ पयोधरौ स्तनौ यस्याः सेति, सुष्ठु मुखाम्भोजं मुखकमलं यस्याः सेति, सुष्ठु शोभने भ्रुवौ भ्रुकुटी यस्या, सेति एवं प्रस्तौति अभिरमते रममाणो भवति च । एतन्मोहस्य दुश्चेष्टितं दुर्व्यापारोऽस्ति । अनेन विद्वानपि मोहेन स्त्रीलम्पटो भवतीति सूच्यते । शार्दूलविक्रीडितं वृत्तम् ॥

शृङ्गारालम्बनभूतां स्त्रियं वर्णयति पञ्चभिः श्लोकैः—

**क्वचित्सुभ्रूभङ्गैः क्वचिदपि च लज्जापरिगतैः**
**क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः ।**
**नवोढानामेतैर्वदनकमलैर्नेत्रलसितैः**
**स्फुरन्नीलाब्जानां प्रकरपरिकीर्णा इव दिशः ॥ २१ ॥**

**क्वचिदिति** ॥ क्वचिच्छोभनो भ्रूभङ्गो भ्रुकुटीचालनं येषु तैः, क्वचिदपि च लज्जां परिगतैः प्राप्तैः । "लज्जापरिणतैः" इति पाठे लज्जया परिणतैर्नम्रैः, क्वचिद्भीत्या भयेन त्रस्तैस्त्रासं प्राप्तैः, क्वचिदपि च लीलानां हावभावादीनां विलासितं येषु तैः, क्वचिन्नेत्राणां लसितं विलासो येषु तैः, "नेत्रचलितैः" इति पाठे चलितानि नेत्राणि येषु तैः । वाहिताग्न्यादित्वाच्चलितशब्दस्य परनिपातः । यद्वा नेत्राणां चलितं चलनं येषु तैः । भावे क्तः । एतादृशैरेतैर्नवोढानां स्त्रीणां

वदनकमलैर्मुखकमलैः कृत्वा स्फुरन्ति नीलाब्जानि नीलकमलानि तेषां प्रकरः समूहस्तेन परिकीर्णा व्याप्ता इव दिशो भवन्ति । चतुर्थचरणस्थपाठान्तराणि त्वसंबद्धत्वात्त्यक्तानि । स्त्रीष्वत्यन्तासक्तस्य सर्वत्र तन्मुखादिस्फुरणं तत्सदृशवस्तुस्फुरणं च भवतीति भावः । शिखरिणी वृत्तम् ॥

सुन्दरस्त्रीणां स्वभावसिद्धं भूषणमाह—

**वक्त्रं चन्द्रविडम्बि पङ्कजपरीहासक्षमे लोचने**
**वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानां चयः ।**
**वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली**
**वाचोहारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥ २२ ॥**

**वक्त्रमिति** ॥ चन्द्रं विडम्बयति तच्छीलं चन्द्रानुकारि । तत्सदृशमिति यावत् । एवंविधं वक्त्रं मुखम् । पङ्कजानां कमलानां परीहास उपहासस्तस्मिन्क्षमे समर्थे । तदधिकशोभाशालिनीत्यर्थः । एवंविधे लोचने । स्वर्णं सुवर्णमपाकरोति दूरीकरोति तच्छीलः । जयशील इति यावत् । एवंविधो वर्णः । अलिनीं भ्रमरिणीं जयति तच्छीलः । भ्रमरसदृश इति यावत् । एवंविधः कचानां केशानां चयः समूहः । इभानां गजानां कुम्भौ गण्डस्थले तयोर्विभ्रमः शोभा । "अथ विभ्रमः । शोभायां संशये हावे" इति मेदिनी । तां हरतस्तौ गजगण्डसदृशावित्यर्थः । वक्षोजौ स्तनौ । गुर्वी स्थूला नितम्बस्थली कटिपश्चाद्भागः । हारि मनोहारि वाचो मार्दवं मृदुत्वम् । एतत्पूर्वोक्तं सर्वं युवतिषु तरुणस्त्रीषु स्वाभाविकं नैसर्गिकं मण्डनं भूषणमस्ति । एते सर्वे पूर्वोक्ताः स्त्रीषु स्वभावसिद्धा गुणाः सन्तीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

एकैव स्त्री अनुरक्तिविरक्तिभ्याममृतवत्सुखदात्री विषवद्दुःखदात्री च भवतीत्याह—

**नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ।**
**सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ २३ ॥**

**नामृतमिति** ॥ एकां नितम्बिनीं स्त्रियं मुक्त्वा त्यक्त्वा किंचिदपि अमृतं नास्ति विषमपि नास्ति, किंतु सैव स्त्री रक्तानुरक्ता सती अमृतलतामृतवल्लरी भवति, विरक्ता सती विषवल्लरी विषलता भवति । प्रसिद्धममृतममृतं न भवति तद्वत्प्रसिद्धं विषं विषं न भवति, किंतु एकैव स्त्री अनुरक्तिविरक्तिभ्याममृतरूपा विषरूपा च भवतीति भावः । अनुष्टुब्वृत्तम् ॥

स्त्रीणां स्वभावसिद्धाः कटाक्षादयो भावाः भूषणवच्छोभदायका आयुधवत्पुरुषाणां हृदयवेधकाश्च भवन्तीत्याह—

**भ्रूचातुर्याकुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जितांताश्च हासाः ।**
**लीलामन्दं प्रस्थितं सस्मितं च स्त्रीणामेतद्भूषणं चायुधं च ॥ २४ ॥**

**भ्रूचातुर्येति** ॥ भ्रूवोश्चातुर्यं तेनाकुञ्चितानि संकुचितान्यक्षीणि येषु ते । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षचिति' षच् । कटाक्षा अपाङ्गदर्शनानि, स्निग्धाः प्रेमयुक्ताः वाचो वचनानि, लज्जितो लज्जायुक्तोऽन्तो मध्यो येषां ते । लज्जागर्भिता इत्यर्थः । हासा हास्यानि, लीलया मन्दं प्रस्थितं गमनं, सम्यक् स्मितमीषद्धास्यं च, एतत्पूर्वोक्तं सर्वं स्त्रीणां भूषणमलङ्करणमायुधं शस्त्रं च भवति । शालिनी वृत्तम् । "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति तल्लक्षणात् ॥

तारुण्यप्रादुर्भावसमये स्त्रीणां ये ये भावा आविर्भवन्ति ते ते सर्वे रम्या एवेत्याह—

**स्मितं किंचिद्वक्त्रे सरलतरलो दृष्टिविभवः**
**परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।**
**गतीनामारम्भः किसलयितलीलापरिकरः**
**स्पृशन्त्यास्तारुण्यं किमिह नहि रम्यं मृगदृशः ॥ २५ ॥**

**स्मितमिति** ॥ वक्त्रे मुखे किंचिदीषत्स्मितं हास्यम्, सरलोऽवक्रश्चासौ तरलश्चञ्चलश्चैतादृशो दृष्याः विभव ऐश्वर्यम्, अभिनवा या विलासोक्तयः शृङ्गारचेष्टायुक्तभाषणानि तैः सरसो रसयुक्तो वाचां वाणीनां परिस्पन्दो रचना, "रचना स्यात्परिस्पन्दः" इत्यमरः । किसलयितो नवाङ्कुरितो लीलानां परिकर आरम्भः समूहो वा यस्मिन् "भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः । प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि" इति विश्वः । एवंविधो गतीनां गमनानामारम्भः । इह एतेषु पदार्थेषु मध्ये तारुण्यं यौवनं स्पृशन्त्या मृगदृशो मृगनयनायाः किं रम्यं नहि । अपि तु सर्वं रम्यमस्तीत्यर्थः । शिखरिणी वृत्तम् ॥

पुरुषो यावत्सुन्दरीणां दृग्विशिखैर्विद्धो न भवति तावदेव सन्मार्गादिकमालम्बत इत्याह—

**सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां**
**लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।**
**भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते**
**यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ २६ ॥**

**सन्मार्ग इति** ॥ धृतिं धैर्यं मुष्णन्ति चोरयन्तीति धृतिमुषः एते लीलावतीनां विलासवतीनां स्त्रीणां दृष्टिबाणा नयनशराः पुरुषस्य हृदि हृदये यावन्न पतन्ति तावदेव पुरुषः सन्मार्गे आस्ते । तावदेवेन्द्रियाणां प्रभवति समर्थो भवति । स्वाधीनेन्द्रियो भवतीत्यर्थः । तावदेव निन्द्यकर्मणि लज्जां विधत्ते धारयति निन्द्यं कर्म नाचरतीत्यर्थः । तावदेव विनयमपि नम्रतामपि समालम्बत आश्रयते । अनुद्धतो भवतीत्यर्थः । कीदृशा दृष्टिपाताः । भ्रूरेव चापो धनुस्तेनाकृष्टाः पश्चान्मुक्तास्त्यक्ताः । पुनः कीदृशाः । श्रवणपथं कर्णमार्गम् । कर्णपर्यंतमिति यावत् । गताः प्राप्ताः । पुनः कीदृशाः । नीलानि पक्ष्माणि पुङ्खस्थानीयानि येषु ते । स्रग्धरा वृत्तम् ॥

अमृतमयमपि स्त्रीमुखं परिणामे विषसदृशं भवतीति किंपाकफलदृष्टान्तेन दर्शयन्नाह—

**यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृतिधरं**
**मुखाब्जं तन्वङ्ग्याः किल वसति यत्राधरमधु ।**
**इदं तत्किंपाकद्रुमफलमिदानीमतिरसं**
**व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ॥ २७ ॥**

**यदेतदिति** ॥ पूर्णेन्दुः षोडशकलात्मकश्चन्द्रस्तस्य द्युतिं कान्तिं हरतीति तथा । पूर्णचन्द्रसदृशमित्यर्थः । उदारा सरला या आकृतिस्तस्या धरं, "दक्षिणे सरलोदारौ" इत्यमरः । यदेतत्तन्वङ्ग्याः कृशाङ्ग्याः स्त्रियो मुखाब्जं मुखकमलमस्ति, यत्र मुखाब्जे अधरमधु अधरामृतं वसति तिष्ठति । किल निश्चयेन । तदिदं मुखाब्जं किंपाको महाकालसंज्ञको द्रुमो विषवृक्षस्तस्य फलमस्ति "किंपाकः स्यान्महाकालः" इति हलायुधः । तथापीदानीमुपभोगक्षमयौवनसमयेऽति अत्यन्तं रसो गुणोऽनुरागो वा यस्मिन्नेवंविधं भवति । परंतु अस्मिन्पूर्वोक्ते काले यौवनसमये व्यतीतेऽतिक्रान्ते सति असुखदं दुःखदं विषमिव भवति "इदं तावत्" इत्यादि पाठान्तरं त्वप्रयोजकत्वात्त्यक्तम् । तथा च स्त्रीणामतिरम्यमपि मुखाब्जादिकं सर्वमवस्थाभेदेन सुखदं दुःखदं च भवतीति भावः । शिखरिणी वृत्तम् ॥

इदानीमस्मिन्संसारे दुष्टराजद्वारसेवाखिन्नमानसाः पुरुषास्तरुणस्त्रियोऽवलम्बनेन स्वस्थचित्ता भवन्तीत्याह—

**संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवावलम्ब-**
**व्यासङ्गध्वस्तधैर्यं कथममलधियो मानसं संनिदध्युः ।**

**यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः**
**प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः ॥२८॥**

**संसार इति** ॥ यदि अस्मिन्नसारे निःसारे संसारे प्रकर्षेणोद्यन्नुदयं प्राप्तो य इन्दुश्चन्द्रस्तस्य द्युतिः कान्तिस्तस्या निचयः समूहस्तं बिभ्रति धारयन्ति ताः, अम्भोजनेत्राः कमलनयनाः, प्रेङ्खन् शब्दायमानः काञ्चीकलापो यासां ताः, स्तनयोः कुचयोर्भरो भारस्तेन विनमन्नम्रो मध्यभागो यासामेवंविधा एतास्तरुण्यः स्त्रियो न स्युस्तर्हि अमलधियो निर्मलमतयः पुरुषा कुनृपतिर्दुष्टराजः तस्य भवनद्वारं गृहद्वारं तस्य सेवा शुश्रूषा तस्या अवलम्ब आश्रयस्तस्य व्यासङ्गोऽभ्यासस्तेन ध्वस्तं गलितं धैर्यं यस्यैस्तादृशं मानसमन्तःकरणं कथं केन प्रकारेण संनिदध्युः धारयेयुः । समाहितमनस्का भवेयुरित्यर्थः । कुत्सितराजसेवादुःखेन विमनस्काः पुरुषा उक्तविधतरुणीसेवनेन स्वस्थचित्ता भवन्तीति भावः । स्रग्धरा वृत्तम् ॥

वसन्तप्रादुर्भावे सर्वेषां कामोद्दीपकपदार्थगुणानां प्रादुष्करणं भवतीति वक्तुं वसन्तं वर्णयति पञ्चभिः श्लोकैः—

**परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो**
**मधुरविरुतोत्कण्ठा वाचः प्रियाः पिकपक्षिणाम् ।**
**विरलसुरतस्वेदोद्गारा वधूवदनेन्दवः**
**प्रसरति मधौ रात्र्यां जातो न कस्य गुणोदयः ॥ २९ ॥**

**परिमलेति** ॥ मधौ वसन्ततौं प्रसरति प्रकटिते सति कस्य पदार्थस्य गुणानामुदयः प्रादुर्भावो न जातः । अपि तु सर्वेषामपि भवतीत्यर्थः । ते पदार्थाः के तानाह—वाता वायवः परिमलं सुगन्धं बिभ्रति त एवंविधा भवन्तीति शेषः । एवमुत्तरत्रापि । तथा शाखाः शिफाः । "शाखा शिफावरोहः स्यात्" इत्यमरः । नवाङ्कुराणां कोटयो यासु ता एवंविधाः, पिकपक्षिणां कोकिलपक्षिणां वाचः मधुरं यद्विरुतं शब्दितं तेन उत्कण्ठा यासु ता अतएव प्रियाः, तथा रात्र्यां विरलः स्वल्पः सुरते स्वेदो घर्मस्तस्योद्गारः प्रादुर्भावो येषु ते । अत्र पाठान्तराणि मनोरमाणि न भवन्तीति कृत्वा त्यक्तानीति बोध्यम् । वधूवदनान्येवेन्दवश्चन्द्रा इति । हरिणी वृत्तम् ॥

किंच ।

**मधुरयं मधुरैरपि कोकिलाकलकलैर्मलयस्य च वायुभिः ।**
**विरहिणः प्रणिहन्ति शरीरिणो विपदि हन्त सुधापि विषायते ॥ ३० ॥**

**मधुरिति** ॥ अयं मधुर्वसन्तो मधुरैरपि कोकिलानां पिकानां कलकलैः शब्दैः च पुनः मलयस्य मलयपर्वतस्य संबन्धिभिर्वायुभिः कृत्वा विरहिणः कामाग्निसंतप्तान् शरीरिणो देहिनः प्रणिहन्ति संतापयति । इममेवार्थं सामान्यमुखेन द्रढयति—विपदीति । विपदि आपत्तौ प्राप्तायां सुधाप्यमृतमपि विषायते विषमिवाचरति । विषवद्घातयतीत्यर्थः । हन्त इति खेदे । द्रुतविलम्बितं वृत्तम् । "द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात् ॥

**आवासः किल किंचिदेव दयितापार्श्वे विलासालसः**
**कर्णे कोकिलकामिनीकलरवः स्मेरो लतामण्डपः ।**
**गोष्ठी सत्कविभिः समं कतिपयैः सेव्याः सितांशोः कराः**
**केषांचित्सुखयन्त्यवेहि हृदये चैत्रे विचित्राः क्षपाः ॥ ३१ ॥**

**आवास इति** ॥ हे जन, चैत्रे मासि विचित्राः क्षपा रात्रयः केषांचित् हृदये सुखयन्ति सुखं कुर्वन्तीत्यवेहि जानीहि । क्षपाणां वैचित्र्यं दर्शयति—यासु क्षपासु दयितायाः स्त्रियाः पार्श्वे किंचिद्विलासेनालसो मन्द आवासो वसतिः । किंचिदेव भवतीति शेषः । एवमुत्तरत्र । किलेति प्रसिद्धौ । एवेति वाक्यपूरणे । कर्णे कोकिलकामिनीनां कोकिलस्त्रीणां कलरवो मधुरध्वनिः, लतानां मण्डपः स्मेरः प्रफुल्लितः, "प्रफुल्लोत्फुल्लसंफुल्लोच्छ्वसितानि विजृम्भितम् । स्मेरं विनिद्रमुन्निद्रविमुद्रहसितानि च" इति हेमचन्द्रः । कतिपयैः सत्कविभिः समं गोष्ठीसंलापः । "गोष्ठी सभासंलापयोस्त्रियाम्" इति मेदिनी । सितांशोश्चन्द्रस्य कराः किरणाः सेव्या भवन्ति । शार्दूलविक्रीडितं वृत्तम् ॥

किंच ।

**पान्थस्त्रीविरहानलाहुतिकथामातन्वती मञ्जरी**
**माकन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ।**
**अप्येते नवपाटलापरिमलप्राग्भारपाटच्चरा**
**वान्ति क्लान्तिवितानतानवकृतः श्रीखण्डशैलानिलाः ॥ ३२ ॥**

**पान्थेति** ॥ अधुना । वसन्तकाल इत्यर्थः । पान्थस्य पथिकस्य स्त्री तस्या विरह एवानलोऽग्निस्तस्मिन्नाहुतिर्हवनं तस्याः कथा तामातन्वती विस्तारयन्ती माकन्देषु आम्रवृक्षेषु । "माकन्दः सहकारेऽस्त्री" इति मेदिनी । "आम्रश्चूतो रसालोऽसौ सहकारोतिसौरभः" इत्यमरश्च । मञ्जरी पिकाङ्गनाभिः कोकिलस्त्रीभिः सोत्कण्ठं यथा स्यात्तथा आलोक्यते । अपि च एते प्रसिद्धाः नवा चासौ पाटला पाटलिवृक्षस्तत्सम्बन्धी परिमलः सुगन्धस्तस्य प्राग्भा-

रोऽतिशयस्तस्य पाटच्चराश्चोराः । पाटलाकुसुमगन्धहारिण इत्यर्थः । "चौरिकागारिकस्तेनदस्युतस्करमोषकाः । प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः" इत्यमरः । क्लान्तिः क्लमस्तस्य वितानो विस्तारस्तस्य तानवं तनुत्वं कुर्वन्तीति कृतः एवंविधाः श्रीखण्डशैलश्चन्दनपर्वतस्तत्सम्बन्धिनोऽनिला वायवो वान्ति वहन्ति । शार्दूलविक्रीडितं वृत्तम् ॥

किंच ।

**सहकारकुसुमकेसरनिकरभरामोदमूर्च्छितदिगन्ते ।**
**मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ३३ ॥**

**सहकारेति** ॥ सहकारस्याम्रवृक्षस्य कुसुमं पुष्पं तत्संबन्धिनः केसराः किञ्जल्कास्तेषां निकरः समूहस्तस्य भरोऽतिशयित आमोदः सुगन्धस्तेन मूर्च्छिता व्याप्ता दिगन्ता यस्मिंस्तस्मिन् मधुरं यन्मधु तेन विधुरा विकला मधुपा भ्रमरा यस्मिंस्तस्मिन् । "वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु" इति त्रिकाण्डशेषः । एवंविधे मधौ वसन्ते कस्य पुरुषस्योत्कण्ठा न भवेदपितु सर्वस्याऽपि भवेदित्यर्थः । आर्या वृत्तम् ॥

ग्रीष्मेऽपि हर्षकामयोर्वर्धकाः पदार्था भवन्तीति तत्पदार्थदर्शनपुरःसरं क्रमप्राप्तं ग्रीष्मं वर्णयति श्लोकत्रयेण—

**अच्छार्द्रचन्दनरसार्द्रकरा मृगाक्ष्यो**
**धारा गृहाणि कुसुमानि च कौमुदी च ।**
**मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं**
**ग्रीष्मे मदं च मदनं च विवर्धयन्ति ॥ ३४ ॥**

**अच्छार्द्रेति** ॥ ग्रीष्मे ग्रीष्मर्तौ एते प्रसिद्धाः पदार्थाः पुरुषस्य मदं हर्षं "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति मेदिनी । मदनं कामं च विवर्धयन्ति विस्तारयन्ति । एते के । अच्छः स्वच्छो य आर्द्रचन्दनस्तस्य रसेनार्द्रौ करौ यासां ता मृगाक्ष्यो मृगनयनाः स्त्रियः, धारागृहाणि जलयन्त्रगृहाणि, कुसुमानि पुष्पाणि, कौमुदी चन्द्रिका, मन्दः सुखस्पर्शो मरुद्वायुः, सुमनसो मालतीलताः, शुचि शुभ्रं हर्म्यपृष्ठं चेति । वसन्ततिलका वृत्तम् ॥

किंच ।

**स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः**
**परागः कासारो मलयजरजः सीधु विशदम् ।**
**शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो**
**निदाघार्ता ह्येतत्सुखमुपलभन्ते सुकृतिनः ॥ ३५ ॥**

**स्रज इति** ॥ निदाघेन ग्रीष्मेणार्ताः पीडिताः सुकृतिनः पुण्यवन्त एव एतत् पूर्वोक्तं सुखमनायासेन यथा स्यात्तथोपलभन्ते प्राप्नुवन्ति । हि निश्चयेन । एतत्किम् । हृद्यो मनोहारी आमोदः सुगन्धो यासां ता एवंविधाः स्रजः पुष्पमालाः, व्यजनपवनस्तालवृन्तवायुः, "व्यजनं तालवृन्तकम्" इत्यमरः । चन्द्रकिरणाश्चन्द्रमयूखाः, परागः पुष्परेणुः, "परागः कौसुमे रेणौ" इत्यमरः । कासारः सरोवरम्, मलयजरजश्चन्दनरेणुः, विशदं स्वच्छं सीधु मद्यम्, "मैरेयमासवः सीधुः" इत्यमरः । "मध्वासवः सीधुसुराः" इति हलायुधश्च । शुचिः शुभ्रः सौधस्य राजगृहस्योत्सङ्ग उपरिभागः, प्रतनु सूक्ष्मं वसनं वस्त्रम्, पङ्कजदृशः कमलनयनाः स्त्रियश्चेति । शिखरिणी वृत्तम् ॥

किंच ।

> **सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशधरः**
> **प्रियावक्राम्भोजं मलयजरजश्चातिसुरभिः ।**
> **स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने**
> **करोत्यन्तः क्षोभं न तु विषयसंसर्गविमुखे ॥ ३६ ॥**

**सुधाशुभ्रमिति** ॥ तत्प्रसिद्धमिदं पूर्वोक्तमखिलं सर्वं रागिण्यनुरागवति जनेऽन्तर्मनसि क्षोभं विकारं करोति । पुनः विषयाणां संसर्गः संपर्कस्तस्माद्विमुखे पराङ्मुखे । वैराग्यवति जन इत्यर्थः । न करोति । इदं किम् । सुधया प्रासादलेपनद्रव्येण शुभ्रं स्वच्छं धाम गृहम्, स्फुरन्तो देदीप्यमाना अमलाः स्वच्छा रश्मयः किरणा यस्य स एवंविधः शशधरश्चन्द्रः, प्रियायाः स्त्रिया वक्राम्भोजं मुखकमलम्, अतिसुरभि अतिसुगन्धि मलयजश्चन्दनस्तत्सम्बन्धि रजो धूलिः, हृद्यामोदाः मनोहारिसुगन्धा एवंविधाः स्रजः पुष्पमालाश्चेति । शिखरिणी वृत्तम् ॥

क्रमप्राप्तां प्रावृषं वर्णयति पञ्चभिः श्लोकैः—

> **तरुणीवैषा दीपितकामा विकसितजातिः पुण्यसुगन्धिः ।**
> **उन्नतपीनपयोधरभारा प्रावृट् तनुते कस्य न हर्षम् ॥ ३७ ॥**

**तरुणीवैषेति** ॥ एषा प्रावृट् तरुणीव युवतिरिव कस्य पुरुषस्य हर्षं न तनुते विस्तारयति ॥ अपि तु सर्वस्यापि हर्षं तनुत इत्यर्थः । "कुरुते" इत्यपि पाठः । कथंभूता प्रावृट् तरुणी च । दीपित उद्दीपितः कामो यया पक्षे यस्यां च । विकसिता प्रफुल्लिता जातिर्मालतीलता यस्याम्, पक्षे केशादौ धा-

रणत्वेन विकसिता जातयो जातिपुष्पाणि यस्यामत एव पुण्यो मनोज्ञः सुगन्धो यस्याम्, पक्षे अङ्गादिसौगन्ध्यं तरुणीपक्षेऽपि तथैव बोध्यम् । "पुण्यं त्रिषु मनोज्ञे स्यात्" इति विश्वः । पुनः कथंभूता । उन्नता उच्चा पीनाः पुष्टाः पयोधरा मेघा यस्याम्, पक्षे उन्नतौ उच्चौ पीनौ पुष्टौ पयोधरौ स्तनौ यस्या इति । उपचित्रा वृत्तम् । "नवमे भवति गुरावुपचित्रा" इति लक्षणात् ॥

किंच—

**वियदुपचितमेघं भूमयः कन्दलिन्यो**
**नवकुटजकदम्बामोदिनो गन्धवाहाः ।**
**शिखिकुलकलकेकारावरम्या वनान्ताः**
**सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ३८ ॥**

**वियदिति** ॥ प्रावृषि एते पूर्वोक्ताः पदार्थाः सुखिनमसुखिनं दुःखिनं वा सर्वं जनमुत्कण्ठयन्ति उत्कण्ठायुक्तं कुर्वन्ति । एते के । उपचिताः पुष्टा मेघा यस्मिंस्तत् एवंविधं वियद्गगनम्, कन्दलिन्यो नवाङ्कुरयुक्ता भूमयः, नवा नूतनाः कुटजाः कदम्बाश्च तेषामामोदः सुगन्धोऽस्ति येषु ते गन्धवाहा वायवः, शिखिनां मयूराणां कुलं समूहस्तस्य कलो मन्द्रः केकारावः केकाशब्दस्तेन रम्या मनोहरा वनान्ता अरण्यप्रदेशाश्चेति । मालिनी वृत्तम् ॥

किंच ।

**इतो विद्युद्वल्लीविलसितमितः केतकितरोः**
**स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ।**
**इतः केकीक्रीडाकलकलरवः पक्ष्मलदृशां**
**कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ॥ ३९ ॥**

**इत इति** ॥ संभृतः पुष्टो रसः शृङ्गारादिरसो येषु त एते पूर्वोक्ताः पक्ष्मलदृशां स्त्रीणां विरहदिवसाः कथं यास्यन्ति गमिष्यन्ति । एते के । इत एकतः विद्युद्वल्ल्या विद्युल्लताया विलसितम्, इत एकतः केतकितरोः केतकिवृक्षस्य स्फुरन्प्रकाशमानो गन्धः सुगन्धः, इत एकतः प्रोद्यदुद्गच्छन्यो जलदो मेघस्तस्य निनदो गर्जितं तस्य स्फूर्जितं स्फुरणम्, इत एकतः केकिनां मयूराणां क्रीडासु कलकलरवो बहुभिः क्रियमाणः कलकलाख्यो ध्वनिश्चेति । शिखरिणी वृत्तम् ॥

किंच ।

**असूचीसंसारे तमसि नभसि प्रौढजलद-**
**ध्वनिप्राये तस्मिन्पतति दृषदां नीरनिचये ।**

**इदं सौदामिन्याः कनककमनीयं विलसितं**
**मुदं च ग्लानिं च प्रथयति पथिष्वेव सुदृशाम् ॥ ४० ॥**

**असूचीति** ॥ प्रौढो यो जलदो मेघस्तस्य ध्वनेः प्रायो बाहुल्यं यस्मिन्, "प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि" इति विश्वः। एवंविधे नभसि श्रावणे, "नभः खं श्रावणो नभाः" इत्यमरः। न विद्यते सूच्याः संसारः संसरणं यस्मिन्। अतिगाढ इत्यर्थः। तस्मिन् प्रसिद्धे तमसि अन्धकारे दृशदां करकोपलानां नीरेण जलेन सह निचये समूहे पतति सति इदं प्रसिद्धं कनकमिव सुवर्णमिव कमनीयं सुन्दरं सौदामिन्या विद्युल्लताया विलसितं स्फुरणं पथिष्वेव मार्गेष्वेव शोभने दृशौ यासां तासां स्त्रीणां मुदं हर्षं ग्लानिं क्लान्तिं च प्रथयति विस्तारयति। प्रोषितानां सुदृशां विद्युत्प्रकाशे हर्षं तदभावे ग्लानिं, अथवा प्रियसहितानां मुदं तद्रहितानां ग्लानिं चेत्युभयविधान्भावानेकस्मिन्नेव मार्गे जनयतीत्यर्थः। शिखरिणी वृत्तम् ॥

किंच।

**आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते**
**शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिङ्ग्यते।**
**जाताः शीतलशीकराश्च मरुतश्चात्यन्तखेदच्छिदो**
**धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥ ४१ ॥**

**आसारेणेति** ॥ धन्यानां पुण्यवतां प्रियासंगमे स्त्रीसंगमे दुर्दिनमपि मेघच्छन्नदिवसोऽपि सुदिनतां याति प्राप्नोति। बतेति हर्षे। तदेव विवृणोति। आसारेण धारासंपातेन हेतुना प्रियतमैः पतिभिर्हर्म्यतो गृहाद्बहिर्यातुं गन्तुं न शक्यते। तथा शीतेन य उत्कम्पः कम्पनं तन्निमित्तं आयतदृशा विशालाक्ष्या स्त्रिया गाढं समालिङ्ग्यते। पतिरिति शेषः। तथा शीतलाः शीकरा अम्बुकणा येषु ते अत एवात्यन्तं खेदं श्रमं छिन्दन्ति ते एवंविधा मरुतो वायवो जाता उत्पन्ना इति। शार्दूलविक्रीडितं वृत्तम् ॥

क्रमप्राप्तां शरदं वर्णयति—

**अर्धं नीत्वा निशायाः सरभससुरतायासखिन्नश्लथाङ्गः**
**प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते।**
**संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो**
**ज्योत्स्नाभिन्नाच्छधारं पिबति न सलिलं शारदं मन्दभाग्यः ॥४२॥**

**अर्धमिति** ॥ निशाया रात्र्या अर्धं यथाकथंचिन्नीत्वा पश्चात्सरभसे सातिवेगे

सुरते मैथुने य आयासः श्रमस्तेन खिन्नान्यत एव श्लथानि शिथिलीभूतान्यङ्गानि यस्य स एवंभूतस्तथा प्रकर्षेणोद्भूतातएवासह्या सोढुमशक्या तृष्णा यस्य स एवंभूतस्तथा मधुनो मद्यस्य मदे निरतस्तत्परः । मधुमदयुक्त इत्यर्थः । एवंविधः पुरुषः विविक्ते विजने । एकान्त इति यावत् । हर्म्यपृष्ठे प्रासादोपरिभागे संभोगेन क्लान्ता ग्लानिं प्राप्ता या कान्ता स्त्री तस्या या शिथिला भुजलता बाहुलता तया आवर्जितमानीतं, ज्योत्स्नया चन्द्रिकया भिन्नं मिश्रं एवंविधं शारदं शरत्कालिकं सलिलं जलं कर्करीतः कर्कर्या "कर्कर्यालुर्गलन्तिका" इत्यमरः । सार्वविभक्तिकस्तसिः । यो न पिबति स मन्दभाग्योऽस्तीति शेषः । शरदि सुरतायासखिन्नः सन् प्रासादोपरिभागे तथाविधकान्तयार्पितं जलं पिबति स नरो धन्य इति भावः । स्रग्धरा वृत्तम् ॥

क्रमप्राप्तं हेमन्तं वर्णयति—

**हेमन्ते दधिदुग्धसर्पिरशनामाञ्जिष्ठवासोभृतः**
**काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ।**
**पीनोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे**
**ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ४३ ॥**

**हेमन्त इति** ॥ हेमन्ते हेमन्तर्तौ गृहाभ्यन्तरे गृहमध्ये सुखं यथा स्यात्तथा ये शेरते निद्रां कुर्वन्ति ते धन्याः कीदृशाः । दधि च दुग्धं च सर्पिर्घृतं च तेषामशनं येषां ते, तथा माञ्जिष्ठं मञ्जिष्ठया रञ्जितं वासो वस्त्रं बिभ्रति ते माञ्जिष्ठवासोभृतः, तथा, काश्मीरद्रवः केशरद्रवस्तेन सान्द्रं निबिडं दिग्धं लिप्तं वपुर्येषां ते, तथा विचित्रैरनेकप्रकारै रतैः सुरतैः खिन्नाः, तथा पीनौ पुष्टौ ऊरू विशालौ स्तनौ कुचौ येषां एतादृशाः ये कामिनीजनाः स्त्रीजनास्तैः कृत आश्लेष आलिङ्गनं येषां ते, तथा ताम्बूलीदलं नागवल्लीदलं पूगः क्रमुकफलं च ताभ्यां पूरितं मुखं येषां ते एवंविधाः । शार्दूलविक्रीडितं वृत्तम् ॥

क्रमप्राप्तं शिशिरर्तुं वर्णयति द्वाभ्यां श्लोकाभ्याम्—

**चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना**
**वक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।**
**ऊरूनाकम्पयन्तः पृथुजघनतटात्स्रंसयन्तोंऽशुकानि**
**व्यक्तं कान्ताजनानां विटचरितकृतः शैशिरा वान्ति वाताः ॥ ४४ ॥**

**चुम्बन्त इति** ॥ कान्ताजनानां स्त्रीणां गण्डभित्तीः कपोलप्रदेशान् व्यक्तं

स्पष्टं चुम्बन्तः, तथा अलकवति कुटिलकुन्तलवति मुखे आनने सीत्कृतान्यादधानाः कुर्वन्तः, तथा उद्गताः कञ्चुकाः चोलका येभ्यस्तेषु। निष्कासितकञ्चुकेष्विति यावत्। एवंविधेषु वक्षःसु हृदयेषु स्तनयोः कुचयोर्भरो भारस्तस्मिन् पुलकानां रोमाञ्चानामुद्भेदमुद्गममापादयन्तः। संपादयन्तः। तथा ऊरून्सक्थीनि आकम्पयन्त ईषत्कम्पयन्तः, पृथु विस्तीर्णं यज्जघनतटं तस्मादंशुकानि वस्त्राणि स्रंसयन्तो निष्कासयन्त एवंविधा विटानां चरितमिव चरितं कुर्वन्तीति ते। विटा यथा चुम्बनादि चरितं कुर्वन्ति तथा चरितकारिण इत्यर्थः। तथाविधाः शैशिराः शिशिरसंबन्धिनो वाता वायवो वान्ति वहन्तीति। स्रग्धरा वृत्तम्॥

**केशानाकलयन् दृशौ मुकुलयन् वासो बलादाक्षिप-**
**न्नातन्वन्पुलकोद्गमं प्रकटयन्नङ्गेषु कम्पं गतैः।**
**वारंवारमुदारसीत्कृतकृतो दन्तच्छदान् पीडय-**
**न्प्रायः शैशिर एष संप्रति मरुत्कान्तासु कान्तायते॥ ४५॥**

**केशानिति**॥ केशान्कचानाकलयन्नितस्ततः परिभ्रामयन्, पक्षे धारयन्। दृशौ नेत्रे मुकुलयन्मीलयन्, पक्षे हस्तादिनाच्छादयन्। वासो वस्त्रं बलादाक्षिपन्नाकर्षयन्, स्पर्शादिना पुलकोद्गमं रोमाञ्चप्रादुर्भावमातन्वन्विस्तारयन्, अङ्गेषु शरीरावयवेषु गतैर्गमनैः कृत्वा कम्पं प्रकटयन्प्रकटीकुर्वन्, वारंवारं पुनःपुनः उदारं महत्सीत्कृतं सीत्कारशब्दं कुर्वन्तीति ते कृतः एवंविधान् दन्तच्छदानोष्ठान् पीडयन् एवंविधः, पक्षे चुम्बनादौ दन्तक्षतैः पीडयन् संप्रतीदानीमेष प्रसिद्धः शैशिरः शिशिरर्तुसंबन्धी मरुद्वायुः कान्तासु स्त्रीषु प्रायः बाहुल्येन कान्तायते। कान्त इवाचरतीत्यर्थः। कान्तो यथा केशाकर्षणादिकं करोति तथायमपि करोतीति भावः। शार्दूलविक्रीडितं वृत्तम्॥

**प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृति विदलत्कुन्दमाद्यद्विरेफे**
**काले प्रालेयवातप्रचलविकसितोद्दाममन्दारदाम्नि।**
**येषां नो कण्ठलग्ना क्षणमपि तुहिनक्षोदरक्षा मृगाक्षी**
**तेषामायामयामा यमसदनसमा यामिनी याति यूनाम्॥ ४६॥**

**प्रोद्यदिति**॥ प्रोद्यन्तः प्रौढा ये प्रियङ्गवः प्रियङ्गुवृक्षास्तेषां द्युतिं शोभां बिभर्तीति द्युतिभृत् तस्मिन्। प्रियङ्गुवृक्षशोभायुक्त इत्यर्थः। तथा विदलन्तो विकसन्तो ये कुन्दाः कुन्दवृक्षास्तेषु माद्यन्तो मदं प्राप्ता द्विरेफा भ्रमरा य-

स्मिंस्तस्मिन्, तथा विकसिता उद्दामाः प्रौढा ये मन्दारा मन्दारवृक्षास्तेषां दाम माला, प्रालेयवातेन हिमयुक्तवायुना प्रचलं चञ्चलं विकसितोद्दाममन्दारदाम यस्मिंस्तस्मिन् एवंविधे काले क्षणमपि क्षणमात्रमपि तुहिनस्य हिमस्य क्षोदाश्चूर्णानि । कणा इति यावत् । तेभ्यो रक्षतीति सा । शीतनिवारिणीत्यर्थः । "चूर्णे क्षोदः समुत्पिञ्जः" इत्यमरः । एवंविधा मृगाक्षी मृगलोचना स्त्री येषां कण्ठे लग्ना संलग्ना नो, तेषां यूनां यामिनी रात्रिः आयामो दैर्घ्यं तद्विशिष्टा यामाः प्रहरा यस्या एवंविधा सती यमस्य सदनं गृहं तेन समा तुल्या । अत्यन्तदुःखकारिणीत्यर्थः । याति गच्छति । स्रग्धरा वृत्तम् ॥

प्रियाया नासाग्रमौक्तिकं चन्द्रत्वेनोत्प्रेक्ष्य वर्णयति—

**सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन ।**
**अनङ्गसंजीवनदृष्टिशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ ४७ ॥**

**सुधामय इति** ॥ हे नायिके, सुधामयोऽमृतमयः अत एव अनङ्गस्य कामस्य संजीवने दृष्टिशक्तिर्दृष्टिसामर्थ्यं यस्य सः । कामोद्दीपक इत्यर्थः । एवंविधोऽपि चन्द्रः क्षयरोगस्य शान्त्यै शमाय नासाया नासिकाया यदग्रं तत्संबन्धि यन्मुक्ताफलकं तस्य छलेन मिषेण ते मुखामृतं पिबतीवेत्यहं मन्य इति शेषः । उपजातिर्वृत्तम् ॥

संसारसुखेच्छुना कान्तासहवासोऽवश्यं कार्यो न तु संसारतरणेच्छुनेत्यमुमर्थं बोधयन्नाह—

**संसारोदधिनिस्तारपदवी न दवीयसी ।**
**अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ४८ ॥**

**संसारेति**॥ रे जन, यदि अन्तरा संसारसमुद्रे दुस्तरा दुर्घटामदिरेक्षणाः स्त्रियो न स्युस्तर्हि संसारोदधेः संसारसमुद्रस्य निस्तारो निस्तरणं तस्य पदवी मार्गः दवीयसी दूरतरा नास्ति किन्तु समीपवर्तिन्येव "संसार तव" इति पाठे संसारेति संबोधनम् । तथा च सति वैराग्ये कान्तासेवनं त्याज्यमसति तु तस्मिन्संसारसुखेच्छुना कान्तासेवनमेव कार्यमिति भावः । अनुष्टुब् वृत्तम् ॥

एतदेव भङ्ग्यन्तरेणाह—

**कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।**
**मा संचर मनःपान्थ तत्रास्ते स्मरतस्करः ॥ ४९ ॥**

**कामिनीति** ॥ हे मनः पान्थ, कुचावेव पर्वतौ ताभ्यां दुर्गमे गन्तुमशक्ये

कामिन्याः स्त्रियाः काय एव कान्तारमरण्यं तस्मिन् मा संचर मा गच्छ। कुतः, तत्र तस्मिन्नरण्ये स्मरः काम एव तस्करश्चोर आस्ते। अनुष्टुब् वृत्तम् ॥

सर्वेषामनर्थानां मूलं यौवनमित्याह—

**रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतु-**
**र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य।**
**कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं**
**लोकेऽस्मिन्नह्यनर्थव्रजकुसुमवनं यौवनादन्यदस्ति ॥ ५० ॥**

**रागस्येति** ॥ रागस्यानुरागस्यैकमगारं गृहम्, नरकाणां शतानि तेषु महादुःखानि तेषां संप्राप्तिस्तस्या हेतुः कारणं, मोहस्योत्पत्तिस्तस्या बीजम्, ज्ञानमेव ताराधिपश्चन्द्रस्तस्य जलधरपटलम्। मेघपटलवदाच्छादकमिति यावत्। कन्दर्पस्य मदनस्यैकमित्रं मुख्यमित्रम्, प्रकटितो विविधा नानाप्रकाराः स्पष्टा ये दोषास्तेषां प्रबन्धो रचना यस्मिंस्तत्, एवंविधमर्थाद्यौवनमेव अस्मिँल्लोके अनर्थानां व्रजः समूहस्तस्य वनं पुष्पवाटिका, यौवनात्तारुण्यादन्यत्किमपि नास्ति। हि निश्चयेन। स्रग्धरा वृत्तम् ॥

पूर्वश्लोके यौवनस्य सर्वानर्थकरत्वं प्रतिपाद्येदानीं तादृशं यौवनं प्राप्य यो विक्रियां न व्रजति स धन्य इत्याह—

**शृङ्गारद्रुमनीरदे विसृमरक्रीडारसस्रोतसि**
**प्रद्युम्नप्रियबान्धवे चतुरतामुक्ताफलोदन्वति।**
**तन्वीनेत्रचकोरपार्वणविधौ सौभाग्यलक्ष्मीनिधौ**
**धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥ ५१ ॥**

**शृङ्गारेति** ॥ यः कोऽपि कश्चित्पुरुषः शृङ्गार एव द्रुमो वृक्षस्तस्य नीरदे पोषकत्वेन मेघरूपे, विसृमरो विसृत्वरो यः क्रीडारसस्तस्य स्रोतसि प्रवाहे। क्रीडारसजनक इत्यर्थः। प्रद्युम्नः कामस्तस्य प्रियबान्धवे हितकारिणि बन्धौ, चतुरतैव मुक्ताफलानि तेषामुदन्वति समुद्रे। तज्जनक इत्यर्थः। तन्व्याः स्त्रिया नेत्रे एव चकोरौ चकोरपक्षिणौ तयोः पर्वणि भवः पार्वणः पौर्णिमासंबन्धी विधुश्चन्द्रस्तस्मिन्। तन्वीनेत्रयोरत्यन्ताह्लादजनक इत्यर्थः। सौभाग्यलक्ष्मीर्नितरां धीयते यस्मिंस्तथाविधे। सौभाग्यलक्ष्म्या निवासस्थान इत्यर्थः। एवंविधे नवे नूतने यौवने प्राप्ते सति विक्रियां मनोविकारं न

कलयति न प्राप्नोति स धन्यः पुण्यवान् । पूज्य इति यावत् । भवतीति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥

प्रायः सद्गतिप्रतिबन्धकत्वं स्त्रीणामेवेत्यभिप्रायेणाह—

**शास्त्रज्ञोऽपि प्रथितविनयोऽप्यात्मबोधोऽपि बाढं**
**संसारेऽस्मिन्भवति विरलो भाजनं सद्गतीनाम् ।**
**येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती**
**वामाक्षीणां भवति कुटिला भ्रूलता कुञ्चिकेव ॥ ५२ ॥**

**शास्त्रज्ञोऽपीति** ॥ एतस्मिञ्जगति निरयनगरस्य नरकपुरस्य द्वारमुद्घाटयन्ती उद्घाटनं कुर्वन्ती । कर्त्रीत्यर्थः । कुटिला वक्रा वामाक्षीणां सुन्दरनयनानां स्त्रीणां भ्रूलता कुञ्चिकेव लोके "किल्ली" इति प्रसिद्धसाधनभूतेव येन हेतुना भवति, तस्माद्धेतोः शास्त्रं जानातीति शास्त्रज्ञोऽपि प्रथितो विख्यातो विनयो यस्यैवंविधोऽपि बाढं दृढमात्मनो बोधो ज्ञानं यस्यैवंविधोऽपि पुरुषः अस्मिन्संसारे सद्गतीनामुत्तमगतीनां भाजनं पात्रं विरलः कश्चिदेव भवति । निरयद्वारोद्घाटनकर्त्री कुञ्चिकासदृशी मोहिका स्त्रीणां भ्रूलता यावज्जगति जागरूका तावत् शास्त्रज्ञत्वादिगुणविशिष्टा अपि पुरुषाः सद्गतीनां पात्राणि न भवन्तीति भावः । मन्दाक्रान्ता वृत्तम् । "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति तल्लक्षणात् ॥

द्रष्टव्यश्राव्यादिषु रूपादिविषयेषु किमुत्तममिति प्रश्नोत्तरविधयाह—

**द्रष्टव्येषु किमुत्तमं मृगदृशां प्रेमप्रसन्नं मुखं**
**घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः ।**
**किं स्वाद्येषु तदोष्ठपल्लवरसः स्पर्शेषु किं तत्तनु-**
**र्ध्येयं किं नवयौवनं सुहृदयैः सर्वत्र तद्विभ्रमः ॥ ५३ ॥**

**द्रष्टव्येष्विति** ॥ द्रष्टव्येषु दर्शनीयवस्तुषूत्तमं किमस्तीति शेषः । एवमुत्तरत्रापि । मृगदृशां मृगलोचनानां स्त्रीणां प्रेम्णा प्रसन्नं मुखमाननमुत्तममस्ति । उत्तमपदस्य सर्वत्रान्वयः । घ्रातव्येष्वपि घ्राणयोग्येष्वपि उत्तमं किम्, तस्याः स्त्रिया आस्यं मुखं तत्संबन्धी पवनो वायुः श्राव्येषु श्रवणीयेषु उत्तमं किम्, तस्याः स्त्रियो वचो वचनम् । स्वाद्येषु स्वादनीयेषु उत्तमं किम्, तस्या ओष्ठपल्लवोऽधरोष्टपल्लवस्तत्संबन्धी रसः । स्पर्शेषु किमुत्तमम्, तस्यास्तनुः शरीरम् । सुहृदयैः शोभनान्तःकरणैः पुरुषैः ध्येयं ध्यातुं योग्यं किम्, नवं नूतनं यौवनं तारुण्यम्, सर्वत्र सर्वकर्मणि तस्या विभ्रमो विलासश्चेष्टा वा । शार्दूलविक्रीडितं छन्दः ॥

शृङ्गाररससेवनं कुर्वतापि पुरुषेण वेश्यासङ्गमो न कार्योऽतिनिन्द्यत्वादिति बोधयन् वेश्यावृत्तमाह श्लोकत्रयेण—

**वेश्यासौ मदनज्वाला रूपेन्धनसमेधिता।**
**कामिभिर्यत्र हूयन्ते यौवनानि धनानि च॥ ५४॥**

**वेश्येति**॥ यत्र यस्यां कामिभिः पुरुषैः यौवनानि तारुण्यानि धनानि द्रव्याणि च हूयन्ते, असौ प्रसिद्धा वेश्या रूपमेवेन्धनं काष्ठं तेन समेधिता वर्धिता मदनज्वाला कामाग्निज्वाला अस्ति। अनेन यौवनधननाशकारिणी वेश्या पुरुषैर्न सेव्येति सूचितम्। अनुष्टुब् वृत्तम्॥

किंच।

**कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि।**
**चारभटचौरचेटकनटविटनिष्ठीवनशरावम्॥ ५५॥**

**क इति**॥ चारः स्पशः, भटो नीचपुरुषविशेषः। "भटः स्यात्पुंसि वीरे च विशेषे पामरस्य च" इति मेदिनी। चौरः स्तेनः। चेटको दासः, "दासगोप्यकचेटकाः" इत्यमरः। नटो नर्तकः, विटो जारस्तेषां निष्ठीवनस्य श्लेष्मोत्सर्गस्य शरावः पात्रविशेषस्तम्, एवंविधं मनोज्ञमपि मञ्जुलमपि वेश्याया अधरपल्लवस्तं कः कुलपुरुषः कुलीनः पुरुषश्चुम्बति चुम्बनं करोति। अपि तु न कोऽपीत्यर्थः। तस्मात्कुलीनपुरुषेण कुलमालिन्यकरं वेश्यासेवनं न कर्तव्यमिति सूचितम्। आर्या वृत्तम्॥

किंच।

**जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च**
**ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च।**
**यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया**
**पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः॥ ५६॥**

**जात्यन्धायेति**॥ जात्यैवान्धस्तस्मै, च पुनर्दुर्मुखाय दुर्गन्धेन दुष्टं मुखं यस्य तस्मै, जरया जीर्णान्यखिलान्यङ्गानि यस्य तस्मै, ग्रामीणाय ग्राम्याय। विलासाचतुरायापीति यावत्। दुष्कुलाय नीचकुलाय, गलत्प्रस्रवद्यत्कुष्ठं तेनाभिभूताय व्याप्ताय, एवंविधाय पुरुषाय लक्ष्म्या लवो लेशस्तस्य श्रद्धयेच्छया "संप्रत्ययः स्पृहा" इत्यमरः। मनोहरं निजवपुः स्वकीयशरीरं यच्छन्तीषु ददतीषु विवेक एव कल्पलतिका कल्पवल्ली तस्याः शस्त्रीषु शस्त्रवच्छेदिकासु एवंविधासु पण्यस्त्रीषु सेव्यासु कः पुरुषो रज्येतासक्तो भवेत्। न

कोऽपीत्यर्थः । अनेन केवलं लक्ष्मीलेशप्राप्तीच्छया जात्यन्धत्वादिदोषविशिष्टायापि पुरुषाय स्वशरीरमर्पयन्ती विवेकच्छेदिका वेश्या विवेकिपुरुषेण न सेव्येति सूचितम् । शार्दूलविक्रीडितं वृत्तम् ॥

एकचित्तपूर्वकः सङ्गम एव कामफलं विभिन्नचित्तकृतः सङ्गमस्तु शवसङ्गमवन्निष्फल इत्याह—

**एतत्कामफलं लोके यद्द्वयोरेकचित्तता ।**
**अन्यचित्तकृते कामे शवयोरिव सङ्गमः ॥ ५७ ॥**

**एतदिति** ॥ लोके यत् द्वयोः स्त्रीपुरुषयोरेकचित्तता एकचित्तत्वमेतदेव कामस्य फलं भवतीति शेषः । अन्यस्मिन्पुरुषेऽन्यस्यां योषिति वा यच्चित्तं तेन कृते कामे सति शवयोर्मृतयोर्द्वयोः सङ्गम इव भवति । अनुष्टुब्वृत्तम् ॥

यावत्पर्यन्तं पुरुषः कामाधीनो न तावन्महत्त्वादयो गुणाः सन्तीत्याह—

**तावन्महत्त्वं पाण्डित्यं विवेकित्वं कुलीनता ।**
**यावज्ज्वलति नाङ्गेषु हन्त पञ्चेषुपावकः ॥ ५८ ॥**

**तावदिति** ॥ यावत्पुरुषस्याङ्गेषु अवयवेषु पञ्चेषुः काम एव पावकोऽग्निर्न ज्वलति तावदेव महत्त्वं महतो भावो महत्त्वं पूज्यत्वम् । पाण्डित्यं विवेकित्वं सदसद्विवेकित्वम्, कुलीनता सत्कुलप्रभवत्वम् तिष्ठतीति शेषः । विवेकिना पुरुषेण कामवशेन न भाव्यमित्यनेन सूचितम् । अनुष्टुब्वृत्तम् ॥

लोकप्रसिद्धराजवत्कामाख्यो राजा स्त्रीरूपस्वीयमुद्रोल्लङ्घनकर्तारं दण्डयतीत्याह—

**स्त्रीमुद्रां झषकेतनस्य परमां सर्वार्थसंपत्करीं**
**ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।**
**ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः**
**केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ५९ ॥**

**स्त्रीमुद्रामिति** ॥ ये मूढा अज्ञानिनः कुधियः कुत्सितबुद्धयः पुरुषा मिथ्याफलानि स्वर्गादीनि अन्वेषयन्ति मृगयन्ति त एवंविधाः सन्तः परमामुत्कृष्टां सर्वार्थानां संसारसुखोपयोगिपुरुषार्थानां संपदं करोतीति तां तथाविधाम् । सर्वार्थप्राप्तिकरीमिति यावत् । झषो मत्स्यः केतने ध्वजे यस्य एवंविधस्य कामस्य स्त्रीरूपां मुद्रां विहाय त्यक्त्वान्यत्र यान्ति ते पुरुषास्तेन कामेनैव निर्दयतरं यथा स्यात्तथा निहत्य ताडयित्वा नग्नीकृता वस्त्रहीनाः कृताः । केचिन्मुण्डिताः केशरहिताः कृता इति शेषः । एवमेवोत्तरत्रापि बोध्यम् ।

केचित्पञ्चशिखीकृताः पञ्चशिखाधारिणः कृताः । केचिज्जटिला जटाधारिणः कृताः । अपरेऽन्ये कापालिका नरकपालधारिणः कृता इति । यथा प्रसिद्धो राजा स्वीयमुद्रोल्लङ्घनकर्तारं दण्डयति तथा कामाख्यो राजापि संसार-सुखसाधनं कामिन्येवेति सिद्धान्तं कृत्वा तदुपरि कृतां स्वीयां स्त्रीरूपां मुद्रा-मुलङ्घ्य येऽन्यथा वर्तन्ते तान् नग्नीकरणादिरूपदण्डेन दण्डयतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

कामजनितस्त्रीमोहो दुरुद्धर इत्यर्थं रूपकविधयाह—

**विस्तारितं मकरकेतनधीवरेण स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ।**
**तेनाचिरात्तदधरामिषलोलमर्त्यमत्स्यान्विकृष्य स पचत्यनुरागवह्नौ॥६०॥**

**विस्तारितमिति** ॥ अत्रास्मिन् भवाम्बुराशौ भवसमुद्रे मकरकेतनः काम एव धीवरः कैवर्तस्तेन स्त्रीसंज्ञितं स्त्रीनामकं बडिशं मत्स्यवेधनं विस्तारितं प्रसारितम् । तेन कामप्रसृतबडिशेनाचिराच्छीघ्रं तासां स्त्रीणामधर एवामिषं मांसं तस्मिन् लोलाः सतृष्णा ये मर्त्यमत्स्या मनुष्यरूपा मत्स्यास्तान् विकृष्या-कृष्य स कामोऽनुरागवह्नौ प्रेमाग्नौ पचति । वसन्ततिलका वृत्तम् ॥

प्रेमपूर्वकं स्त्रीभिः क्रियमाणं कर्मोल्लङ्घयितुं कोऽपि न समर्थ इत्याह—

**उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः ।**
**तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ६१ ॥**

**उन्मत्तेति** ॥ अङ्गनाः स्त्रिय उन्मत्तमुच्छृङ्खलं यत्प्रेम तस्य संरम्भाद्वेगा-द्यत् कर्म आरभन्ते तत्र प्रत्यूहं विघ्नमाधातुं कर्तुं ब्रह्मापि कातरो भयच-कितो भवति । खलु निश्चयेन । सोपि न समर्थोऽस्तीत्यर्थः । स्त्रीचरित्रोल्लङ्घनं ब्रह्मणोऽपि दुर्घटमिति स्वकन्यानुवर्तनादिना पुराणादौ प्रसिद्धमिति भावः । अनुष्टुब् वृत्तम् ॥

कामिनीष्वत्यन्तासक्तस्य पुरुषस्य ताः सर्वस्वं हरन्तीत्याह—

**प्रणयमधुराः प्रेमोद्गाढा रसादलसास्तथा**
**भणितमधुरा मुग्धप्रायाः प्रकाशितसंमदाः ।**
**प्रकृतिसुभगा विश्रम्भार्हाः स्मरोदयदायिनो**
**रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ ६२ ॥**

**प्रणयेति** ॥ मृगीदृशां हरिणाक्षीणां स्त्रीणां स्वैरालापाः स्वेच्छाभाषणानि किमप्यनिर्वचनीयं हरन्ति । सर्वस्वं हरन्तीत्यर्थः । कीदृशाः स्वैरालापाः । प्रणयेन नम्रतया मधुराः प्रियाः, प्रेम्णा उद्गाढा भरिताः, तथा रसाच्छृङ्गारा-

दिरसादलसाः शिथिलाः, तथा भणितेन रतिकूजितेन मधुराः, मुग्धप्राया अस्फुटाः, प्रकाशितः संमदो हर्षो येषु ते तथाविधाः, प्रकृत्या स्वभावेन सुभगाः सुन्दराः, विश्रम्भार्हा विश्वासयोग्याः, स्मरस्य कामस्योदयं ददति तच्छीला एवंविधाः । हरिणी वृत्तम् ॥

मालाचन्दनादिधारणपूर्वकः प्रियासङ्गमः स्वर्गसुखद इत्याह—

**मालती शिरसि जृम्भणोन्मुखी चन्दनं वपुषि कुङ्कमाविलम् ।**
**वक्षसि प्रियतमा मनोहरा स्वर्ग एष परिशिष्ट आगतः ॥ ६३ ॥**

**मालतीति** ॥ यस्य शिरसि जृम्भणे विकसन उन्मुखी मालती जातिपुष्पमाला । अस्तीति शेषः । एवमुत्तरत्रापि बोध्यम् । यस्य वपुषि शरीरे कुङ्कमेनाविलं मिश्रं चन्दनमस्ति, यस्य वक्षसि हृदये मनोहरा मनोज्ञा प्रियतमा स्त्री अस्ति, तस्य पुरुषस्य एष परिशिष्टः पुण्यावशिष्टः स्वर्गो भुवि आगतः प्राप्त इति बोध्यम् । रथोद्धता वृत्तम् । "रान्नराविह रथोद्धता लगौ" इति तल्लक्षणात् ॥

इह जगति कामिन्येव सर्ववशीकरणसमर्था भवतीत्याह—

**कुङ्कमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।**
**नूपुरहंसरणत्पदपद्मा कं न वशं कुरुते भुवि रामा ॥ ६४ ॥**

**कुङ्कमेति** ॥ कुङ्कमस्य काश्मीरस्य पङ्कः कर्दमस्तेनाङ्कितश्चिह्नितो देहो यस्याः सा, गौरौ पयोधरौ स्तनौ ताभ्यां कम्पितो हारो यस्याः सा, नूपुराणि मञ्जीराण्येव हंसास्तै रणती शब्दायमाने पदपद्मे चरणकमले यस्याः सा, एवंविधा रामा स्त्री भुवि पृथिव्यां कं पुरुषं वशमधीनं न कुरुते । अपि तु सर्वं वशं कुरुत इत्यर्थः । दोधकं वृत्तम् । "दोधकवृत्तमिदं भभभाद्गौ" इति लक्षणात् ॥

स्वकटाक्षपातैरिन्द्रादीनामपि मोहनकर्तृत्वसामर्थ्यवतीनां स्त्रीणां कविभिः क्रियमाणेऽबलात्वव्यवहारो मुधेति कथयंस्तासां बलवत्त्वमाह—

**नूनं हि ते कविवरा विपरीतबोधा**
**ये नित्यमाहुरबला इति कामिनीनाम् ।**
**याभिर्विलोलतरतारकदृष्टिपातैः**
**शक्रादयोऽपि विजिता अबलाः कथं ताः ॥ ६५ ॥**

**नूनमिति** ॥ ये कवयः कामिनीनां कामिनीः । कर्मणः शेषत्वविवक्षायां संबन्धसामान्ये षष्ठी । यद्वा नामेत्यध्याहृत्य कामिनीनां नाम अबला इति नित्यमाहुर्वदन्ति ते कविवराः कविश्रेष्ठाः विपरीतो बलवत्त्वविरुद्धो बोधो

ज्ञानं येषां ते तथाविधाः सन्ति । हि निश्चितम् । नूनमिति वितर्के। अथवा ते कविवराः कामिनीनां विषये विपरीतबोधाः सन्ति । ते के । ये ताः अबला इति आहुरित्यन्वयः । कुतो विपरीतबोधा इत्याशङ्क्याह—याभिरिति । याभिः कामिनीभिः विलोलतरा अतिचञ्चलास्तारका अक्षिकनीनिका येषु एवंविधा ये दृष्टिपाताः कटाक्षास्तैः शक्रादय इन्द्रादयोऽपि विजिताः ताः स्त्रियोऽबलाः कथम् । अपि तु न भवन्तीत्यर्थः । वसन्ततिलका वृत्तम् ॥

**दिश वनहरिणीभ्यो वंशकाण्डच्छवीनां**
**कवलमुपलकोटिच्छिन्नमूलं कुशानाम् ।**
**शुकयुवतिकपोलापाण्डुताम्बूलवल्ली-**
**दलमरुणनखाग्रैः पाटितं वा वधूभ्यः ॥ ६६ ॥**

**दिशेति** ॥ हे जन, त्वं वने अरण्ये या हरिण्यो मृग्यस्ताभ्यः वंशस्य वेणोः काण्डो दण्डः । "काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः । तस्येव छविः कान्तिर्येषां तेषां कुशानां दर्भाणाम् । "अस्त्री कुशं कुथो दर्भः" इत्यमरः । उपलस्य पाषाणस्य कोटिरग्रभागस्तेन छिन्नं मूलं यस्यैवंविधं कवलं ग्रासम् । "ग्रासस्तु कवलः पुमान्" इत्यमरः । दिश देहि । वा अथवा वधूभ्यः स्त्रीभ्यः अरुणानि कृष्णलोहितानि, "अरुणः कृष्णलोहितः" इत्यमरमाला । ईषद्रक्तानीति यावत् । यानि नखानि तेषामग्राणि तैः पाटितं छिन्नं एवंविधं, शुकयुवत्याः कीरस्त्रियाः । 'गृध्रौ कीरशुकौ समौ" इत्यमरः । कपोलो गण्डस्तद्वत् आ ईषत् पाण्डुः पीतमिश्रश्वेतवर्णा, "पाण्डुस्तु पीतभागार्धः केतकीधूलिसंनिभः" इति शब्दार्णवः । या ताम्बूलवल्ली तस्याः दलं पर्णं दिशेत्यर्थः । मालिनी वृत्तम् ॥

स्तनभारादयो व्यथां कुर्वन्त्यथापि तदपेक्षयाऽधिकां व्यथां मध्यस्थापि रोमावली ददातीत्याह—

**उद्वृत्तः स्तनभार एष तरले नेत्रे चले भ्रूलते**
**रागाधिष्ठितमोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।**
**सौभाग्याक्षरपङ्क्तिकेव लिखिता पुष्पायुधेन स्वयं**
**मध्यस्थापि करोति तापमधिकं रोमावली केन सा ॥ ६७ ॥**

**उद्वृत्त इति** ॥ उद्वृत्त उन्नत एष स्तनभारः कुचभारः तथा तरले चञ्चले नेत्रे, तथा चले भ्रूलते, तथा रागेण रक्तिम्नाधिष्ठितमिदमोष्ठपल्लवमधरपल्लवम्, एते सर्वे कामिपुरुषस्य व्यथां पीडां कुर्वन्तु नाम; परंतु तद-

पेक्षया पुष्पमेवायुधं यस्य तेन कामेन स्वयं लिखिता । सौभाग्यद्योतकानि यानि अक्षराणि वर्णास्तेषां पङ्क्तिरेव पङ्क्तिका । स्वार्थे कः । सेव मध्यस्थापि रोमावली रोमपङ्क्तिः सा अधिकं यथा स्यात्तथा तापं दुःखं करोति सा केन हेतुनेत्यहं न जाने । लोके हि मध्यस्थस्तथा तापं न ददातीति प्रसिद्धम्, इयं च रोमावली मध्यस्था सत्यपि हेतुं विनैवाधिकं तापं ददातीति तस्याः सर्वापेक्षयाधिकतापदातृत्वमस्तीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

स्त्रीणां सर्वथा प्रियः कोऽपि नास्तीत्याह—

**जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।**
**हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ६८ ॥**

**जल्पन्तीति** ॥ सविभ्रमा हावादिचेष्टायुक्ताः स्त्रियः । "विभ्रमो भ्रान्तिहावयोः" इति मेदिनी । अन्येन पुरुषेण सार्धं जल्पन्ति, तथा अन्यं पुरुषं पश्यन्ति, तथा हृदयेऽन्तःकरणेऽन्यं चिन्तयन्ति तस्मात् योषितां स्त्रीणां प्रियः को नाम । न कोऽपीत्यर्थः । अनुष्टुब् वृत्तम् ॥

युवतीलाभ एव तापसः फलमित्याह—

**स्वपरप्रतारकोऽसौ निन्दति योऽलीकपण्डितो युवतीः ।**
**यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गेऽपि चाप्सरसः ॥ ६९ ॥**

**स्वपरेति** ॥ अलीकपण्डितो मिथ्यापाण्डित्यविशिष्टो यः पुरुषो युवतीस्तरुणस्त्रीर्निन्दति असौ स्वस्य परस्य च प्रतारको वञ्चकोऽस्ति । कुतः । यस्माद्धेतोस्तपसः फलं स्वर्गोऽस्ति स्वर्गेऽपि च अप्सरस एव फलं भोग्यं नान्यदित्यर्थः । तपःकरणपूर्वकं स्वर्गे गतस्याप्यप्सरसामेव भोग्यत्वमतो युवतीनिन्दानुचितेति भावः । पथ्या वृत्तम् । "त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः । पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम्" इति तल्लक्षणात् ॥

शशिकिरणान् निवारयन्त्याः कस्याश्चित्स्त्रिया वने विचरणमाह—

**विश्रम्य विश्रम्य वने द्रुमाणां छायासु तन्वी विचचार काचित् ।**
**स्तनोत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ ७० ॥**

**विश्रम्येति** ॥ काचित्तन्वी विरहिणी स्त्री, द्रुमाणामरण्यवृक्षाणां छायासु विश्रम्य विश्रम्य विश्रान्तिं कृत्वा । आदरार्थे वीप्सा । करेण हस्तेनोद्धृतं तेन स्तनोत्तरीयेण स्तनोपरिस्थवस्त्रेण शशिनश्चन्द्रस्य मयूखान्किरणान् निवारयन्ती सती वने अरण्ये विचचार । संचारं कृतवतीत्यर्थः । उपजातिर्वृत्तम् ॥

मनस्युत्पन्नोऽभिलाष उत्तरोत्तरमधिकाधिकः संस्तृप्तिहेतुर्न भवतीत्याह—

**अदर्शने दर्शनमात्रकामा दृष्ट्वा परिष्वङ्गरसैकलोलाः ।**
**आलिङ्गितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम् ॥ ७१ ॥**

**अदर्शन इति** ॥ पुरुषाः स्त्रियाः प्रथमं अदर्शने दर्शनाभावे दर्शनमात्रे कामोऽभिलाषो येषां तथाभूताः । भवाम इति शेषः । एवमुत्तरत्रापि । तां दृष्ट्वा परिष्वङ्गे आलिङ्गने यो रसः प्रेम तस्मिन्नेकलोला अत्यन्तं सतृष्णा भवामः । दैववशाद्दर्शने जाते तदालिङ्गनाभिलाषिणो भवाम इत्यर्थः । पुनरायताक्ष्यां दीर्घलोचनायां स्त्रियामालिङ्गितायां सत्यां वयं विग्रहयोर्देहयोरभेदं अपार्थक्यमाशास्महे इच्छामः । दैववशादालिङ्गनलाभेऽपि तावता तुष्यन्तो वियोगभीत्या देहाभेदमाशासानाः सन्तो न तृप्याम इति भावः । उपजातिर्वृत्तम् ॥

इह संसारेऽनुकूलां स्त्रियमुपभुञ्जाना ये पुरुषास्त एव धन्या नान्य इत्याह—

**उरसि निपतितानां स्रस्तधम्मिल्लकानां**
**मुकुलितनयनानां किंचिदुन्मीलितानाम् ।**
**सुरतजनितखेदस्विन्नगण्डस्थलाना-**
**मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ ७२ ॥**

**उरसीति** ॥ उरसि हृदये निपतितानां पतितानामर्थाद्विपरीतसुरत इत्यर्थः । स्रस्तो विस्रस्तो धम्मिल्लः केशपाशो यासां तासाम् । समासान्तः कप् । मुकुलिते सुखवशान्मीलिते नयने नेत्रे यासां तासाम् । किंचिदीषदुन्मीलितानामीषत्पश्यतीनामित्यर्थः । सुरते जनितो यः खेदः श्रमस्तेन स्विन्ने घर्मयुक्ते गण्डस्थले कपोलौ यासां तासामेवंविधानां वधूनां स्त्रीणामधरमधु अधरासवं ये पिबन्ति ते भाग्यवन्तः सन्ति । मालिनी वृत्तम् ॥

पथिकः पुरुषो नवीनमेघप्रादुर्भावं दृष्ट्वा गन्तुमशक्तः स्वप्रियां चिन्तयन्सन् तत्रैव तिष्ठन्नास्ते तामेव चिन्तां दर्शयति—

**किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम् ।**
**इत्युदीर्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम् ॥ ७३ ॥**

**किं गतेनेति** ॥ कश्चित्पथिकः नवमेघमालिकां नूतनमेघपङ्क्तिं दृष्ट्वा यदि सा प्रियतमा स्त्री मद्विहरेण न जीवति तर्हि गतेन गृहगमनेन किम्, अथवा प्राणिति जीवति तथापि किं कर्तव्यमिति शेषः । मेघाद्याविर्भावेण गन्तुमशक्यत्वादित्यर्थः । इति पूर्वोक्तप्रकारेण उदीर्य स्वमन्दिरं स्वगृहं न प्रयाति न गच्छति । रथोद्धता वृत्तम् ॥

अङ्गीकृतस्य कामाख्यपुरुषार्थस्य परमावधिमाह—

**आमीलितनयनानां यत्सुरतरसो नु संविदं कुरुते।**
**मिथुनैर्मिथोऽवधारितमवितथमिदमेव कामनिर्वहणम् ॥ ७४ ॥**

**आमीलितेति** ॥ आ ईषन्मीलिते नयने नेत्रे यासां, सुरते यो रसः स नु निश्चितं संविदं ज्ञानम्। सुखसाक्षात्कारमिति यावत्। "संवित्स्त्रियां प्रतिज्ञायामाचारज्ञानसंगरे" इति मेदिनी। कुरुत इति यत्, तदेवेदं मिथुनैर्द्वन्द्वैरवधारितं निश्चितं अवितथं सत्यं कामस्य, निर्वहणं निष्ठा। आरब्धस्य कामाख्यपुरुषार्थस्य पर्यवसानमिति यावत्। "निर्वहणं तु निष्ठा स्त्री संहारश्च समापने" इति शब्दार्णवः। गीतिर्वृत्तम्, "आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः कलयति शोभां तां गीतिं गीतवान्भुजङ्गेशः" इति तल्लक्षणात् ॥

संभोगे कुलस्त्रीरतस्य रमणीयत्वमाह—

**प्राङ्मामेति मनागमानितगुणं जाताभिलाषं ततः**
**सव्रीडं तदनु श्लथीकृततनु प्रत्यस्तधैर्यं पुनः।**
**प्रेमार्द्रं स्पृहणीयनिर्भररहःक्रीडाप्रगल्भं ततो**
**निःशङ्काङ्गविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ ७५ ॥**

**प्राङ्मामेति** ॥ प्राक् रतिसमये मामा नेतिनेति निषेधवाचकशब्दैर्मनाक् ईषत् न मानिता गुणा यस्मिंस्तत्, मनागित्यनेन सर्वथा गुणावमाननं नेति सूचितम्। अत एव ततोऽनन्तरं जातोऽभिलाष इच्छा यस्मिंस्तत्, तदनु सव्रीडं सलज्जं यथा स्यात्तथा श्लथीकृता शिथिलीकृता तनुः शरीरं यस्मिंस्तत्, तनुशैथिल्यविशिष्टमित्यर्थः। तथापि तदलाभे पुनः प्रत्यस्तं नष्टं धैर्यं यस्मिंस्तत्, प्रेम्णा आर्द्रं स्निग्धम्। प्रेमयुक्तमित्यर्थः। स्पृहणीया स्पृहायोग्या निर्भरा अतिशयिता या रहःक्रीडा एकान्तक्रीडा तया प्रगल्भं प्रौढम्। ततो निःशङ्कं यदङ्गस्य विकर्षणमाकर्षणं तेनाधिकं सुखं यस्मिन्नेवंविधं कुलस्त्रीरतं कुलीनस्त्रीरतं रम्यं मनोहरमस्ति। नान्यस्त्रीरतमित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥

एकस्याः स्त्रिया दर्शनादर्शनभेदेनामृततुल्यत्वं विषतुल्यत्वं चाह—

**तावदेवामृतमयी यावल्लोचनगोचरः।**
**चक्षुःपथादपेता तु विषादप्यतिरिच्यते ॥ ७६ ॥**

**तावदेवेति** ॥ यावत् स्त्री लोचनगोचरश्चक्षुर्विषयीभूता भवतीति शेषः। ता-

वदेव अमृतमयी अमृतप्राया भवति, तत्तुल्यसुखदत्वादित्यर्थः। चक्षुःपथान्नेत्रमार्गादपेता रहिता तु विषादपि अतिरिच्यत अधिका भवति। तत्तुल्यदुःखदातृत्वादित्यर्थः। अनुष्टुब् वृत्तम्॥

कामस्य दुर्जयत्वमपस्माररूपकेणाह—

**न गम्यो मन्त्राणां न च भवति भैषज्यविषयो**
**न चापि प्रध्वंसं व्रजति विविधैः शान्तिशतकैः।**
**भ्रमावेशादङ्गे किमपि विदधद्भङ्गमसमं**
**स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च॥ ७७॥**

**न गम्य इति**॥ अयं स्मर एवापस्मारो रोगविशेषो मन्त्राणां गम्यो न भवति, मन्त्ररूपैरुपायैरप्यपरिहार्य इत्यर्थः। च पुनर्भैषज्यं औषधं तद्विषयो न भवति। तेनाप्यपरिहार्य इत्यर्थः। च पुनर्विविधैः शान्तिशतकैः शान्तिकारकैरुपायैः प्रध्वंसं नाशं न व्रजति गच्छति, तथा भ्रमावेशादसमं न्यूनाधिकभावेन विषममङ्गे शरीरे किमपि अनिर्वचनीयं भङ्गं भेदम्। शान्त्यादिनाप्यपरिहार्य इत्यर्थः। विदधत् कुर्वन्सन् दृशं दृष्टिं भ्रमयति भ्रमणं कारयति। घूर्णयति च। प्रसिद्धापस्मारो हि मन्त्रादिभिः परिभवत्ययं च तैरप्यपरिहार्यत्वादतिदुर्जय इति भावः। शिखरिणी वृत्तम्॥

अयं च मदनः स्त्रीकटाक्षसंचाराधीनसंचारवत्त्वात्तदाज्ञाकर इत्याह—

**नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः।**
**यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते॥ ७८॥**

**नूनमिति**॥ सुष्ठु भ्रुवौ भ्रुकुटी यस्यास्तस्याः स्त्रियो मकरध्वजः कामो नूनं निश्चितमाज्ञाकर आज्ञापालकोऽस्ति। यतो यस्माद्धेतोस्तस्याः स्त्रियो नेत्रसंचारेण नेत्रचालनेन सूचितेषु पुरुषेषु प्रवर्तते प्रवृत्तो भवति। अनुष्टुब् वृत्तम्॥

स्त्रीष्वत्यन्तासक्तः पुरुषः कमपि जगद्व्यवहारं न जानातीत्याह—

**सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु।**
**विना मे मृगशावाक्ष्या तमोभूतमिदं जगत्॥ ७९॥**

**सतीति**॥ प्रदीपे सति, अग्नौ सति, तारा शुक्रादयः रविः सूर्य इन्दुश्चन्द्रश्च तेषु तमोनाशकेषु सत्स्वपि, "सत्सु नानामणिष्वपि" इति पाठः। मृगशावाक्ष्या मृगस्य हरिणस्य शावो बालकस्तस्याक्षिणीवाक्षिणी नेत्रे यस्यास्तया स्त्रिया

सर्वं जगत् तमोभूतं तमोरूपमस्ति। स्त्रीकटाक्षैर्विद्धोऽहं जगति कार्यमकार्यं वा किमपि न पश्यामीत्यर्थः। अनुष्टुब् वृत्तम्॥

एतादृशीं मोहिकां स्त्रियमेव वर्णयति—

**मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः।**
**पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा॥ ८०॥**

**मुखेनेति**॥ सा प्रसिद्धा स्त्री चन्द्रवत्कान्तं मनोहरं तेन मुखेन, पक्षे चन्द्रकान्तेन मणिना, तथा महान्तश्च ते नीलास्तैः कृष्णवर्णैः शिरोरुहैः केशैः, पक्षे महानीलैर्नीलमणिभिः, तथा, पद्मं रक्तकमलं तद्वद्रागो रक्तिमा ययोस्ताभ्यां पाणिभ्यां हस्ताभ्यां, पक्षे पद्मरागाभ्यां पद्मरागमणिभ्यां रत्नमयीव रत्नप्रचुरेव रेजे शुशुभे। अनुष्टुब् वृत्तम्॥

**गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता।**
**शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा॥ ८१॥**

**गुरुणेति**॥ सा स्त्री गुरुणा महता स्तनभारेण कुचभारेण, पक्षे गुरुणा बृहस्पतिना, भास्वता देदीप्यमानेन मुखमेव चन्द्रस्तेन, पक्षे भास्वता सूर्येण वा चन्द्रेण च, शनैर्मन्दं चरतस्ताभ्यां पादाभ्यां चरणाभ्यां, पक्षे शनैश्चरेण, शनैश्चराभ्यामिति द्विवचनं तु पादयोर्विशेषणाभिप्रायेण, ग्रहमयीव सूर्यादिग्रहप्रचुरेव रेजे शोभितवती। अनुष्टुब् वृत्तम्॥

एतामेव स्त्रियं प्रसिद्धधानुष्कापेक्षया वैलक्षण्येन वर्णयति—

**मुग्धे धानुष्कता केयमपूर्वा दृश्यते त्वयि।**
**यदा विध्यसि चेतांसि गुणैरेव न सायकैः॥ ८२॥**

**मुग्ध इति**॥ हे मुग्धे सुन्दरि, केयमपूर्वा प्रसिद्धधानुष्कापेक्षया विलक्षणा धनुः प्रहरणमस्य धानुष्कं तस्य भावो धानुष्कता धनुष्मत्त्वं त्वयि दृश्यते। "तदस्य प्रहरणम्" इत्यर्थे ठक्। "इसुसुक्तान्तात्कः" इत्यनेन ठस्य कः। शरदः कृतार्थेत्यादिवत्सामान्ये नपुंसकम्। वैलक्षण्यमेवाह—यदिति। यद्यस्मात्पुरुषाणां चेतांसि गुणैर्धनुर्ज्याभिरेव आविध्यसि हंसि, सायकैर्बाणैर्न। प्रसिद्धो हि धनुष्मान् बहिर्दृश्यमानं लक्ष्यं बाणैर्विध्यति त्वं त्वदृश्यमपि पुरुषचेतोरूपं लक्ष्यं गुणैरेव विध्यसि न तु बाणैरित्यदृष्टपूर्वा विलक्षणा तव धनुष्मत्तेति भावः। अनुष्टुब् वृत्तम्॥

रागिविरागिणोर्मध्ये एकः शिव एव राजते नान्ये तेषामुभयथा च्युतत्वादित्याह—

**एको रागिषु राजते प्रियतमादेहार्धहारी हरो**
**नीरागेष्वपि यो विमुक्तललनासंगो न यस्मात्परः।**

**दुर्वारस्मरबाणपन्नगविषज्वालावलीढो जनः**
**शेषः कामविडम्बितो हि विषयान् भोक्तुं च मोक्तुं क्षमः ॥ ८३ ॥**

**एक इति** ॥ प्रियतमायाः पार्वत्या देहार्धं हरति तच्छीलो हारी एवंविध एक एव हरः शिवो रागिषु राजते, यो विमुक्तस्त्यक्तो ललनासंगः स्त्रीसंगो येनैवंविधो नीरागेष्वपि राजते, यस्माच्छिवात्परोऽन्यः दुर्वारो वारयितुमशक्यो यः स्मरबाणः कामबाणः स एव पन्नगः सर्पस्तस्य या विषज्वाला तयावलीढ आस्वादितः शेषोऽवशिष्टो जनः कामेन विडम्बितः सन् विषयान्भोक्तुं मोक्तुं त्यक्तुं च क्षमः समर्थो न भवतीति शेषः । अयमेक एव शिवपार्वती-परिणयात्प्राक् एनं मोहयितुं प्राप्तोऽपि कामो येन दग्धोऽत एव विमुक्तललना-संगत्वाद्विरागिषु राजते स्म, पश्चात्पार्वतीतपश्चर्यया तुष्टः सन् तद्वियोगभङ्ग-भिया तां देहार्धत्वेन धारयन् रागिष्वपि राजते स्म । नान्ये तथाविधा इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

स्त्रीपुरुषयोः स्थितावस्थाभेदेनानौचित्यं व्युत्क्रमं चाह—

**इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।**
**यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥८४॥**

**इदमिति** ॥ इह लोके पुंसां पुरुषाणां जरास्वपि मन्मथस्य कामस्येमे मान्मथा विकारा भवन्ति इति यत्, तथा यदपि च नितंबिनीनां स्त्रीणां स्तनपतनावधि स्तनपतनपर्यन्तं जीवितं, वा अथवा रतं सुरतं च न कृतं इद-मनुचितमयोग्यमक्रमः । क्रमाभावश्चास्तीति शेषः । पुरुषस्य तारुण्यावस्थायां कामविकारोद्भवस्य सार्थक्येऽपि वृद्धावस्थायां तस्य नैरर्थक्यादनुचितत्वं क्रमवैपरीत्यं च स्त्रीणां च, तारुण्यावस्थायां जीवितस्य रतस्य सफलत्वेऽपि वृद्धावस्थायां जीवितस्थिती रताकरणं चानुचितं क्रमवैपरीत्यं चेति भावः । पुष्पिताग्रा वृत्तम् । "अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात् ॥

सर्पदंशजन्यविषापेक्षया स्त्रीकटाक्षवीक्षणरूपविषस्य दुश्चिकित्सकत्वमाह—

**व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना**
**नीलाब्जद्युतिनाहिना वरमहं दष्टो न तच्चक्षुषा ।**
**दष्टे सन्ति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो**
**मुग्धाक्षीक्षणवीक्षितस्य नहि मे मन्त्रो नवाप्यौषधम् ॥ ८५ ॥**

**व्यादीर्घेणेति** ॥ अहं व्यादीर्घेणातिविस्तीर्णेन, चलेन चञ्चलेन, वक्रा कुटिला गतिर्यस्य तेन, तेजस्विना कान्तिमता, भोगः फणास्ति यस्य तेन,

नीलाब्जवन्नीलकमलवद्द्युतिः कान्तिर्यस्य, कृष्णसर्पस्यातिविषत्वमस्तीत्यनेन सूचितम् । एवंविधेनाहिना सर्पेण दष्टः कृतदंशोऽहं भविष्यामीति वरं मनाक् प्रियम् । सर्पदंशजन्यविषबाधा मनाक्प्रियेत्यर्थः । परंतु तस्या मुग्धाक्ष्याश्चक्षुषा नेत्रेण दष्टो न वरम् । स्त्रीकर्तृककटाक्षदर्शनजन्यविषबाधा न प्रियेत्यर्थः । कुतः । तेनाहिना दष्टे सति दिशि दिशि प्रायेण बाहुल्येन धर्मार्थिनश्चिकित्सका विषवैद्याः सन्ति परंतु मुग्धाक्ष्याः सुन्दरस्त्रिया ईक्षणं नयनं तेन वीक्षितस्यावलोकितस्य । वीक्षणरूपविषदग्धस्येत्यर्थः । मे मम मन्त्रो विषापहारको न, वा अथवा औषधमपि नास्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

एतदेव भङ्ग्यन्तरेण वर्णयन्नाह—

**अपसर सखे दूरादस्मात्कटाक्षविषानला-**<br>
**त्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ।**<br>
**इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधै-**<br>
**श्चटुलवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ८६ ॥**

**अपसरेति** ॥ हे सखे, त्वं अस्मात् कटाक्षा एव विषानलो विषाग्निर्यस्मिंस्तस्मात् "शिखानलात्" इति पाठे कटाक्ष एव शिखा ज्वालास्तद्विशिष्टोऽनलो यस्मिंस्तस्मात्, प्रकृत्या स्वभावेन विषमः प्रसिद्धसर्पापेक्षया विलक्षणस्तस्मात्, विलास एव फणा फटा तां बिभर्तीति भृत् । तस्मात् एवंविधाद्योषित्सर्पात्स्त्रीरूपभुजङ्गमाद्दूरादपसर गच्छ । पलायनं कुर्वित्यर्थः । कुतः । हि यस्मात् इतरफणिना जातितः प्रसिद्धसर्पेण दष्टः पुरुषः औषधैश्चिकित्सितुं शक्यः परंतु मन्त्रिणो मन्त्रवन्तः पुरुषाः चटुला चतुरा या वनिता स्त्री सैव भोगी सर्पस्तेन ग्रस्तं दष्टं पुरुषं त्यजन्ति । चिकित्सितुं शक्ता न भवन्तीत्यर्थः । हरिणी वृत्तम् । "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति लक्षणात् ।

परस्परं संगतमनसां विरहोऽपि संगम एव, विघटितमनस्कानां संगमोऽपि विरह एवेत्याह—

**विरहोऽपि संगमः खलु परस्परं संगतं मनो येषाम् ।**<br>
**यद्धृदयविघटितः संगमोऽपि विरहं विशेषयति ॥ ८७ ॥**

**विरह इति** ॥ येषां मनोऽन्तःकरणं परस्परं संगतं संलग्नमस्तीति शेषः । तेषां विरहोऽपि वियोगोऽपि संगम एव भवतीति शेषः । यद्यदा हृदयविघटितः विघटितं हृदयं यस्मिन्सः । वाहिताग्न्यादित्वात्परनिपातः । एवंविधः संगमोऽपि विरहं वियोगं विशेषयति वर्धयति । करोतीत्यर्थः । आर्या वृत्तम् ॥

पुण्यैर्विना सुन्दरवनितालाभो दुर्लभ इति पुण्यकरणविषये चित्तप्रार्थनां करोतीत्याह—

**यस्याः स्तनौ यदि घनौ जघनं विहारि**
**वक्त्रं च चारु तव चित्त किमाकुलत्वम् ।**
**पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा**
**पुण्यैर्विना नहि भवन्ति समीहितार्थाः ॥ ८८ ॥**

**यस्या इति** ॥ यस्याः स्तनौ कुचौ घनौ सान्द्रौ, जघनं कटिपुरोभागः विहारि विशेषेण मनोहारि, वक्त्रं मुखं च चारु सुन्दरमस्ति यदि तर्हि हे चित्त, तवाकुलत्वं किमिति । यदि तस्याः तेषु स्तनादिषु तव वाञ्छा इच्छा अस्ति चेत्तर्हि त्वं पुण्यं कुरुष्व । हि यस्मात् पुण्यैर्विना कस्यापि समीहितार्था वाञ्छितार्था न भवन्ति । न सिध्यन्तीत्यर्थः । वसन्ततिलका वृत्तम् ॥

सुन्दरस्त्रीणां विलासस्य महत्त्वं वर्णयति—

**इमे तारुण्यश्रीनवपरिमलाः प्रौढसुरत-**
**प्रतापप्रारम्भाः स्मरविजयदानप्रतिभुवः ।**
**चिरं चेतश्चौरा अभिनवविलासैकगुरवो**
**विलासव्यापाराः किमपि विजयन्ते मृगदृशाम् ॥ ८९ ॥**

**इम इति** ॥ तारुण्यस्य यौवनस्य श्रीः शोभा तस्या नवो नूतनः परिमलः । अतिसंमर्द इति यावत् । यद्वा अतिमर्दो मनोहारिगन्धो येषु ते, यौवनश्रियातिशयशोभावन्त इत्यर्थः । "स्यात्परिमलोऽतिमर्दातिमनोहरगन्धयोश्चापि" इति मेदिनी । प्रौढं यत्सुरतं तद्विषयको यः प्रतापः प्रभावस्तस्य प्रारम्भो येषु ते स्मरस्य कामस्य विजयस्तस्य यद्दानं तस्य प्रतिभुवो लग्नकाः । विजयं दातुं समर्था इति यावत् । "स्युर्लग्नकाः प्रतिभुवः" इत्यमरः । चिरं चिरकालं चेतश्चोरयन्ति ते । मनोहारिण इत्यर्थः । अभिनवो नूतनो यो विलासस्तस्यैकगुरवो मुख्यशिक्षकाः एवंविधा इमे प्रसिद्धा मृगदृशां हरिणाक्षीणां विलासव्यापाराः शृङ्गारचेष्टाविशेषाः किमपि अनिर्वचनीयं यथास्यात्तथा विजयन्ते सर्वोत्कर्षेण वर्तन्त इति । शिखरिणी वृत्तम् ॥

ऐहिकपारत्रिकभेदेन पुरुषस्य कर्तव्यमाह—

**आवासः क्रियतां गाङ्गे पापहारिणि वारिणि ।**
**स्तनद्वये तरुण्या वा मनोहारिणि हारिणि ॥ ९० ॥**

**आवास इति** ॥ पुरुषेण पापं हरति तच्छीले गङ्गाया इदं गाङ्गं तस्मिन्

वारिणि जले । तत्तीर इत्यर्थः । आवासः स्थितिः क्रियताम् । पुण्यसंपादनार्थमित्यर्थः । वा अथवा हारो मुक्ताहारोऽस्ति यस्मिंस्तस्मिन् मनोहारिणि तरुण्या युवत्याः स्तनद्वये आवासः स्थितिः क्रियताम् । ऐहिकसुखार्थमित्यर्थः । अनुष्टुब् वृत्तम् ॥

स्त्रीणां प्रशान्तस्यापि वपुषः क्षोभकत्वं श्लेषानुविद्धरूपकविधयाह—

**केशाः संयमिनः श्रुतेरपि परंपारं गते लोचने**
**चान्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ।**
**मुक्तानां सतताधिवासरुचिरं वक्षोजकुम्भद्वयं**
**चेत्थं तन्वि वपुः प्रशान्तमपि ते क्षोभं करोत्येव नः ॥ ९१ ॥**

**केशा इति** ॥ केशाः कचाः संयमो बन्धनमस्ति येषां ते, पक्षे संयमिनो योगिरूपाः, सन्तीति शेषः । तथा लोचने नेत्रे श्रुतेरपि कर्णस्यापि । श्रुतेरिति जात्यभिप्रायेणैकवचनम् । कर्णयोरित्यर्थः । परंपारं गते स्तः । आकर्णविशाले इत्यर्थः । पक्षे श्रुतेर्वेदस्य पारं गते । संपूर्णवेदाध्यायिनीत्यर्थः । तथा वक्त्रं मुखमपि स्वभावेन शुचिभिः शुद्धैर्द्विजानां दन्तानां, पक्षे ब्राह्मणानां गणैः समूहैः कीर्णं व्याप्तम् । "दन्तविप्राण्डजा द्विजाः" इत्यमरः । तथा वक्षोजौ स्तनावेव कुम्भौ घटौ तयोर्द्वयं युग्मं मुक्तानां मुक्ताहाराणां सततं निरन्तरं अधिवासो वसतिस्तया रुचिरं सुन्दरम् । पक्षे मुक्तानां जीवन्मुक्तानामधिवासस्तेन रुचिरमित्यर्थः । हे तन्वि हे कृशाङ्गि, इत्थं पूर्वोक्तप्रकारेण प्रशान्तमपि ते वपुः शरीरं नोऽस्माकमन्तरन्तःकरणे क्षोभं करोति । शार्दूलविक्रीडितं वृत्तम् ॥

उद्दीपकसामग्रीसमवधाने स्त्रीणां मनसि मानोदयो न भवतीत्याह—

**प्रियपुरतो युवतीनां तावत्पदमातनोतु हृदि मानः ।**
**भवति न यावच्चन्दनतरुसुरभिर्निर्मलः पवनः ॥ ९२ ॥**

**प्रियपुरत इति** ॥ यावच्चन्दनतरुणा चन्दनवृक्षेण सुरभिः सुगन्धिर्निर्मलः स्वच्छः पवनो वायुर्न भवति तावत् प्रियस्य पुरतोऽग्रभागे युवतीनां स्त्रीणां हृदि अन्तःकरणे मानोऽभिमानः पदं आतनोतु करोति चेत्करोतु । तत्समवधाने तु सुतरां नश्यतीति भावः । आर्या वृत्तम् ॥

स्त्रीसंगत्यागं कर्तुं विद्वानपि न समर्थ इत्याह—

**वचसि भवति संगत्यागमुद्दिश्य वार्ता**
**श्रुतिमुखरमुखानां केवलं पण्डितानाम् ।**

**जघनमरुणरत्नग्रन्थिकाञ्चीकलापं**
**कुवलयनयनानां को विहातुं समर्थः ॥ ९३ ॥**

**वचसीति** ॥ श्रुत्या शास्त्रेण मुखराणि वाचालानि मुखानि येषां तेषां शास्त्रनिपुणानां पण्डितानां संगस्य संगतेस्त्यागमुद्दिश्य वचसि वाण्यां केवलं वार्तैव भवति। न तु ते संगत्यागं कृतिविषयतामानयन्तीत्यर्थः। तस्मात् अरुणरत्नैः पद्मरागमणिभिर्ग्रन्थिर्ग्रथनं यस्मिन्नेतादृशः काञ्चीकलापो यस्मिंस्तत् एवंविधं कुवलयनयनानां कमलनयनानां स्त्रीणां जघनं कटिपुरोभागं विहातुं त्यक्तुं कः समर्थोऽस्तीति शेषः। अपि तु न कोऽपीत्यर्थः। मालिनी वृत्तम् ॥

मदनवेगस्य दुष्परिहरत्वं श्वदृष्टान्तेनाह—

**कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो**
**व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः।**
**क्षुधा क्षामो जीर्णः पिठरककपालार्पितगलः**
**शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ ९४ ॥**

**कृश इति** ॥ कृशः क्षीणः, काण एकाक्षः, "काणः काकैकचक्षुषोः" इति मेदिनी। खञ्जः खोडः। गतिविकल इति यावत्। "खोडे खञ्जस्त्रिषु जरावराः" इत्यमरः। श्रवणाभ्यां कर्णाभ्यां रहितो हीनः, पुच्छेन लाङ्गूलेन विकलो हीनः, व्रणोऽस्यास्तीति व्रणी, पूयेन क्लिन्न आर्द्रः, कृमीणां कुलं तस्य शतानि तैरावृता व्याप्ता तनुः शरीरं यस्य सः। क्षुधा क्षुधया क्षामः क्षीणः, जीर्णः वृद्धोऽपि, पिठरकस्य घटस्य कपाले शकले अर्पितो गलः कण्ठो येन सः, एतादृशोऽपि श्वा शुनीं अनु पश्चादेति गच्छति। नायं शुनीस्वभावो न शुनः स्वभावः किं तु मदनस्यैवायं प्रभाव इत्याह—हतमपीति। मदनः कामो हतमपि विकलमपि पुरुषं निहन्त्येव मारयत्येव, न मोचयतीत्यर्थः। शिखरिणी वृत्तम् ॥

इन्द्रियनिग्रहस्यातिदुर्घटत्वं विश्वामित्रादिदृष्टान्तपूर्वकमाह—

**विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-**
**स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः।**
**शाल्यन्नं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-**
**स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरम् ॥ ९५ ॥**

**विश्वामित्रेति** ॥ वातो वायुः, अम्बु उदकं, पर्णानि पत्राणि तानि अश्नन्ति ते, एवंविधा अन्नादित्यागिनोऽपि विश्वामित्रः पराशरश्च तौ प्रभृती येषां ते तेऽपि सुललितं सुन्दरं स्त्रियाः मुखपंकजं मुखकमलं दृष्ट्वैव मोहं

गताः । अभूवन्निति शेषः । ये तु मानवाः घृतेन सहितं सघृतं पयो दुग्धं दधि च ताभ्यां युतं शाल्यन्नमोदनं भुञ्जन्ति तेषामिन्द्रियाणां निग्रहो यदीति संभावनायाम् । यदि भवेत्तर्हि विन्ध्यः पर्वतः सागरं समुद्रं तरेत् । समुद्रे विन्ध्यतरणं यथा दुर्घटं तथा शाल्यन्नादिभोजिनामिन्द्रियनिग्रहोऽप्यतिदुर्घट इति भावः । इति शार्दूलविक्रीडितं वृत्तम् ॥

अत्यन्तापकारजनकत्वेन स्त्रीणां भ्रूविक्षेपं खलसादृश्येन वर्णयति—

**अजितात्मसु संबद्धः समाधिकृतचापलः ।**
**भुजङ्गकुटिलः स्तब्धो भ्रूविक्षेपः खलायते ॥ ९६ ॥**

**अजितात्मस्विति** ॥ स्त्रिया भ्रूविक्षेपः कटाक्षचालनं खलायते खल इवाचरति । "कर्तुः क्यङ्—" इति क्यङ् । कीदृशो भ्रूविक्षेपः खलश्च । न जित आत्मा चित्तं यैस्तेष्वजितेन्द्रियेषु संबद्धः, तथा समाधौ चित्तैकाग्र्ये, पक्षे सम्यगाधौ मानसपीडायां विषये कृतं चापलं येन सः, तथा भुजङ्गो जारस्तद्वत्, पक्षे भुजङ्गवत्सर्पवत्कुटिलः, तथा स्तब्धः स्थिरः, पक्षे गर्विष्ठ एवंविधः । अनुष्टुब् वृत्तम् ॥

रूपकविधयाधरचुम्बनकुचमर्दनयोः सहेतुकत्वप्रदर्शनपूर्वकत्वं विषयनिगरणपूर्वकं दर्शयन् स्त्रीणां बाह्याभ्यन्तरस्वभाववैजात्यमाह—

**मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।**
**अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ९७ ॥**

**मध्विति** ॥ योषितां स्त्रीणां वाचि वाण्यां मधु तिष्ठति, हृदि हृदये केवलं हालाहलं तत्संज्ञकविषं तिष्ठतीति संबन्धः । अत एव पुरुषेण स्त्रीणामधरोऽधरोष्ठो निपीयते, हृदयं तु मुष्टिभिरेव ताड्यते । वैतालीयं वृत्तम् । "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इति तल्लक्षणात् ॥

एतावत्पर्यन्तं कृतेन शृङ्गारवर्णनेन परलोकसाधनं न भवतीति तत्साधकं वैराग्यं संपादयितुमादौ तदन्तरायभूतां स्त्रियं निन्दयन्नाह श्लोकद्वयेन—

**आवर्तः संशयानामविनयभवनं पत्तनं साहसानां**
**दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।**
**स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं**
**स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिनामेकपाशः ॥ ९८ ॥**

**आवर्त इति** ॥ संशयानां संदेहनामावर्तः । जलभ्रमणवदविरतसंशयजनकमित्यर्थः । अविनयस्यानीतिकर्मणो भवनं गृहम् । अविनयाव्यभिचारीत्यर्थः ।

साहसानामविचाराणा पत्तनं नगरम् । अविचारप्रचुरमित्यर्थः । दोषाणां संनिधीयन्तेऽस्मिन्निति संनिधानं स्थानम् । दोषनिवासभूतमित्यर्थः । कपटशतमयं अनन्तकपटप्रचुरं, अप्रत्ययानामविश्वासानां क्षेत्रमुत्पत्तिस्थानम् । जनकमिति यावत् । स्वर्गद्वारस्य विघ्नोऽन्तरायः, नरकपुरस्य मुखम्, सर्वमायानां कपटानां करण्डम् । करण्डवत्सर्वकपटसंग्राहकमित्यर्थः । विषं विषमयम् । अन्तर्विषवन्मारकमित्यर्थः । बहिः अमृतमयममृतप्रचुरम्, प्राणिनां एकपाशो मुख्यबन्धनं एवंविधं स्त्रीयन्त्रं केन सृष्टं निर्मितं तन्न जाने । एवंविधं स्त्रीयन्त्रं दृष्ट्वा ततो दूरतः स्थेयमिति भावः । स्रग्धरा वृत्तम् ॥

**सत्यत्वे न शशाङ्क एष वदनीभूतो नवेन्दीवर-**
**द्वन्द्वे लोचनतां गते न कनकैरप्यङ्गयष्टिः कृता ।**
**किंत्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि**
**त्वङ्मांसास्थिमयं वपुर्मृगदृशां मन्दो जनः सेवते ॥ ९९ ॥**

**सत्यत्वे नेति** ॥ सत्यत्वे याथार्थ्ये विचारिते सतीति शेषः । एष शशाङ्कश्चन्द्रः वदनीभूतो न, वा अथवा इन्दीवरद्वन्द्वे नीलकमलयुग्मे लोचनतां नेत्रतां गते न, अङ्गयष्टिः शरीरयष्टिरपि कनकैः सुवर्णैः कृता न, किंतु एवं पूर्वोक्तप्रकारेण कविभिः प्रतारितं वञ्चितं मनो यस्य सः, एवंविधः तत्त्वं याथार्थ्यं विजानन्नपि यो जनः त्वक् च मांसं च अस्थि च तन्मयं मृगदृशां हरिणीदृशां स्त्रीणां वपुः शरीरं सेवते स मन्दो मूढः । मूर्ख इति यावत् । भाग्यहीनो वास्ति । "मूढाल्पापटुनिर्भाग्या मन्दाः" इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥

किंच—

**स्मृता भवति पापाय दृष्टा चोन्मादकारिणी ।**
**स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ १०० ॥**

**इति श्रीमद्भर्तृहरिविरचितं शृङ्गारशतकं समाप्तम् ॥**

**स्मृतेति** ॥ या स्त्री स्मृता सती पापाय भवति, तथा दृष्टा च उन्मादं करोति तच्छीला एवंविधा भवति, तथा स्पृष्टा सती मोहाय भवति सा दयिता प्रिया कथं संभावनायाम् । अनुष्टुब् वृत्तम् ॥

**मया कृष्णेन व्यरचि शृङ्गारशतकोपरि ।**
**अर्थद्योतनिका व्याख्या प्रीयतां तेन माधवः ॥ १ ॥**

**इति श्रीमहाबलोपनामककृष्णसूरिविरचितायामर्थद्योतनिकाभिधायां टीकायां शृङ्गारशतकं संपूर्णम् ॥**

## विक्रय्यपुस्तकानि ।

# गाथासप्तशती

हालोपनामक-महाकवि-सातवाहनसंकलितम् ।

तृतीयं चैतत्संस्करणं मूलप्राकृतग्रंथस्य सान्वर्थप्रत्यक्षरूपया

## संस्कृत-गाथासप्तशत्या

व्यङ्ग्यसर्वङ्कषानाम्न्या च टीकया समलङ्कृतम् । गीर्वाणभाषाललामभूतानां विदुषामपरं जीवनमित्येतद्ग्रंथस्य विख्यातिः सर्वत्र ।

मूल्यं ३ रूप्यकाः, मार्गव्ययः १२ आणकाः ।

**अमरुशतकम्**—श्रीअमरुककविविरचितं, अर्जुनवर्मदेवशर्मप्रणीतया रसिकसंजीविन्या टीकया सहितम्. ॰।।॰ ‌‌-।-

**आर्यासप्तशती**—गोवर्धनाचार्यकृता, अनन्तपण्डितकृतया व्यङ्ग्यार्थदीपनाटीकया सहिता. .... .... १।। -।-

**ऋतुसंहारकाव्यम्**—कालिदासकृतं, मणिरामकृतया टीकया सहितम्. .... .... .... .... ॰।= ८=

**कथाकौतुकम्**—पण्डितश्रीवरविरचितम्. .... .... ॰।।॰ ८=

**किरातार्जुनीयकाव्यम्**—भारविकृतं, मल्लिनाथकृतया घण्टापथटीकया सहितम्. .... .... .... १।।। ॰।=

**काव्यालंकारसंग्रहः**—महामहोपाध्यायश्रीमदुद्भटप्रणीतः, श्रीमत्प्रतीहारेन्दुराजविरचितया काव्यालंकारसारलघुवृत्त्या समेतः. .... .... .... .... ॰।।= -।-

**काव्यालंकारसूत्राणि**—( वृत्तिसहितानि )—अयं पञ्चाधिकरणात्मकोऽलंकारशास्त्रस्य मूलभूतो ग्रन्थः. ॰।।॰ ८≡

**पाण्डुरङ्ग जावजी,**

निर्णयसागरयन्त्रालयाधिपतिः.

श्रीः ।

भर्तृहरिविरचितं

# वैराग्यशतकम् ।

महाबलोपाह्वकृष्णशास्त्रिविरचितया

व्याख्यया समलंकृतम् ।



मूल्यं ६ आणकाः ।



श्रीः

भर्तृहरिविरचितं

# वैराग्यशतकम् ।

महाबलोपाह्वकृष्णशास्त्रिविरचितया

व्याख्यया समलंकृतम् ।

सप्तमं संस्करणम् ।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागरमुद्रणयन्त्रालये मुद्रयित्वा

प्रकाशितम् ।

शाकः १८५४, सन १९३३.

मूल्यं ६ आणकाः ।



॥ श्रीः ॥

# विद्वदभ्यर्थना.

स्वस्तिश्रीमत्समस्तजगदाधारपरमकरुणावतारस्य घनश्यामकल्पविटपिविशङ्कटविटपतटप्रकटप्रोत्कटसुमनःसमानमृदुलभक्तावतंसमनःसिंहासनकृताधिवासनस्य भगवतो नारायणस्य लीलातः प्रवर्तमानायामस्यां पञ्चम्यां भूतसृष्टौ समस्तकविकलाकोविदस्याप्यवगतसकलशास्त्रस्य निजयशःसुधाधवलितविशुद्धविज्ञानविलसितविबुधजनमानसमन्दिरस्य नितान्तशौर्यौदार्यधैर्यवीर्यगाम्भीर्यसौशील्यादिगुणमणिगणाभरणविभूषितकलेवरस्य, पवित्रचरित्रपवित्रीकृतधरित्रीवलयस्य, सकलावनीशवन्दितचरणस्य दिगन्तरलुठत्कीर्ते राजर्षिप्रवरस्य, श्रीमतो भर्तृहरिमहीपालस्य, निजानुभवपुरःसरं संसारतत्त्वार्थसारोपदेशदेशिकीभूतमितं शतकत्रयात्मकं नीतिशृङ्गारवैराग्यविषयनिबद्धं काव्यं समस्तजनकल्याणाय संप्रसार्यमाणं विबुधजलचेतोमहानन्दं समुत्पादयतीति हि तावद्भूयोभूयो जोघुष्यत एव सरलबुद्धिभिर्विद्वद्भिः ॥

तदेतत्काव्यमनन्वितटीकार्थमस्ताव्यस्तनिर्गलितनिरर्गलविषयमासीत् । तादृशाव्यवस्थया ग्रन्थदोषं पर्यालोच्य सहृदयसूचनया प्रेरितोऽहं गोदावरीतीरविलसच्छ्रीनासिकक्षेत्रनिवासिभिर्महाबलोपनामधेयैः कृष्णशास्त्रिभिर्नवीनां काव्यार्थानुगतां टीकां कारयित्वा प्राचीनलिखितपञ्चषट्पुस्तकानि मेलयित्वा ग्रन्थं शोधयित्वा सुविमलकीलकाक्षरैरङ्कित्वा विदुषामग्रतः प्रसिद्धिमनैषम् । तद्धि सुधियो मदीयं प्रयासमभिनन्दनेन कृतार्थयन्त्वित्याशासे ॥



अथ भर्तृहरिकृतं

# वैराग्यशतकं प्रारभ्यते ।

अथ श्रीमद्राजर्षिप्रवरो भर्तृहरिर्द्वितीयं परिणामे वैराग्यजनकं, शृङ्गारशतकं विधायेदानीं वैराग्यशतकं चिकीर्षुर्वैराग्यफलस्य ज्ञानस्य दाता शिवापेक्षयान्यो नास्तीति तं वर्णयति—

**चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्वरो**
**लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।**
**अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन्**
**चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ १ ॥**

चूडोत्तंसितेति ॥ चूडायां केशपाश उत्तंसिता भूषणीभूता चारू रमणीया या चन्द्रकलिका चन्द्रकला तस्याश्चञ्चन्त्यो देदीप्यमाना याः शिखाः किरणास्तैर्भास्वरः शोभायमानः । "घृणिज्वाले अपि शिखे" इत्यमरः । लीलया दग्धो विलोलश्चञ्चलः कामशलभः कामपतङ्गो येन सः । श्रेयः सर्वेषां कल्याणं तस्य दशा अवस्था तदर्थं अग्रे स्फुरन्प्रकाशमानः । लोकानां कल्याणं कर्तुं प्रकटीभूत इत्यर्थः । अन्तरभ्यन्तरे स्फूर्जत्प्रकाशमानोऽपारः पाररहितो यो मोहः स एव तिमिरमन्धकारः । अज्ञानमिति यावत् । तस्य प्राग्भारोऽतिशयस्तमुच्चाटयन्समूलं नाशयन् एवंविधो भक्तचेतसि ज्ञानं प्रदीपयति प्रकाशयतीति ज्ञानप्रदीपः । "प्रज्ञाप्रदीप" इति पाठेऽप्ययमेवार्थः । हरः शिवो योगिनां चेत एव सद्म गृहं तस्मिन्विजयते सर्वोत्कर्षेण वर्तते । शार्दूलविक्रीडितं वृत्तम् ॥

प्रायशो लोके सुभाषितचातुर्यरसज्ञानामभावात्स्वीयं सुभाषितचातुर्यं निन्दयन्नाह कविः—

**बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।**
**अबोधोपहताश्चान्ये जीर्णमङ्गेषु भाषितम् ॥ २ ॥**

बोद्धार इति ॥ बोद्धारो ज्ञानिनः मत्सरेण अन्यस्मिन् दोषदर्शनरूपमात्सर्येण ग्रस्ता व्याप्ताः, तथा प्रभवः राजानः स्मयेनाहमेव गुणी नान्य इति गर्वेण दूषिता दोषयुक्ताः, अन्ये पूर्वोक्तातिरिक्तास्ते अबोधेन अज्ञानेनोपहता नष्टाः सन्तीति किमपि न जानन्तीत्यर्थः । अतः सर्वं भाषितं सुभाषितं अङ्गे-

ष्वेव जीर्णं लीनं भवतीति शेषः। फलाभावाद्बहिर्न प्रकटितमित्यर्थः। "जीर्णमङ्गे सुभाषितम्" इति पाठे सुभाषितमिति स्पष्टोऽर्थः संपद्यते। अनुष्टुप् वृत्तम् ॥

महता पुण्येन संपादिता अपि लौकिका विषयाः सुखजनका न भवन्तीत्याह—

**न संसारोत्पन्नं चरितमनुपश्यामि कुशलं**
**विपाकः पुण्यानां जनयति भयं मे विमृशतः।**
**महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया**
**महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ३ ॥**

न संसारेति ॥ अहं संसारे उत्पन्नं चरितं जगद्व्यापारं कुशलं सुखकरं नानुपश्यामि। ननु पुण्यकर्म सुखकरं स्यादित्याशङ्क्याह—विपाक इति। पुण्यानां पुण्यकर्मणां विपाकः परिणामो विमृशतो विचारयतो मे भयं जनयत्युत्पादयति। कुत इत्याह—महद्भिः पुण्यौघैः पुण्यसमूहैः चिरं चिरकालं परिगृहीता महान्तो विषया विषयिणामनुरागिणां व्यसनं दुःखं दातुमिव जायन्ते। "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति वचनात्। प्राप्तानामपि स्वर्गादिविषयाणां क्षयिष्णुत्वादित्यर्थः। महता यत्नेनाचर्यमाणस्य सकामपुण्यस्य क्षयिष्णुफलजनकत्वेन दुःखदत्वेऽपि सद्गुरूपदेशादिनाचीर्यमाणस्य निष्कामधर्मस्य सुखदत्वादिवशब्दः। अत एव विषयिणामित्युक्तम्। शिखरिणी वृत्तम् ॥

तृष्णाविषयीभूतानां पदार्थानां महता यत्नेनापि संपादयितुमशक्यत्वात् तामेव प्रार्थयन्नाह—

**उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो**
**निस्तीर्णः सरितांपतिर्नृपतयो यत्नेन संतोषिताः ॥**
**मन्त्राराधनतत्परेण मनसा नीताः श्मशाने क्षपाः**
**संप्राप्तश्च वराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ४ ॥**

उत्खातमिति ॥ क्षितितलं निधेर्निक्षेपस्य शङ्कया उत्खातं खनितम्। निधिलाभतृष्णयेत्यर्थः। तथा गिरेः पर्वतस्य संबन्धिनो धातवः स्वर्णादयो ध्माता अनेकौषधियोगेन तापिताः। स्वर्णादिलाभेच्छयेत्यर्थः। तथा सरितां नदीनां पतिः समुद्रो निस्तीर्णो लङ्घितः। रत्नादिवाञ्छयेत्यर्थः। तथा नृपतयो राजानो यत्नेन संतोषिताः संतोषं प्रापिताः। बहुलाभस्पृहयेत्यर्थः। तथा मन्त्रस्याराधने तत्परेण आसक्तेन मनसा श्मशाने क्षपा रात्रयो नीताः। एवंविधे कृतेऽपि

यत्ते मया वराटकोऽपि कदर्पिकापि न संप्राप्तोऽतो हे तृष्णे, अधुना त्वमेव मां मुञ्च त्यज । त्वत्परिहारस्योपायान्तरासाध्यत्वात्त्वामेवाहं प्रार्थय इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

प्रार्थनयाप्यमुञ्चतीं तृष्णां बुद्ध्वा पुनस्तामेव निन्दयन्नाह द्वाभ्याम्—

**भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं**
**त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।**
**भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव-**
**त्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ५ ॥**

भ्रान्तमिति ॥ अनेका दुर्गा दुर्घटप्रदेशास्तैर्विषमं देशं भ्रान्तं भ्रमणं कृतम् । मयेति शेषः । "गत्यर्था" इति भावे क्तः । तथापि किंचिदपि फलं न प्राप्तम् । तथा उचितं योग्यं, जातिर्ब्राह्मणादिः कुलमुत्तमकुलं तयोरभिमानं त्यक्त्वा सेवा कृता सापि निष्फला जातेति शेषः । तथा परगृहेषु मानेन विवर्जितं यथा स्यात्तथा आशङ्कया भयेन काकवत् ध्वाङ्क्षवद्भुक्तम् । "शङ्काभासे वितर्के च" इति मेदिनी । तथापि पापकर्मणि निरते सक्ते एवंविधे हे तृष्णे, जृम्भसि विकसिता भवसि, अद्यापि न संतुष्यसि संतोषं न प्राप्नोषि एत-दपेक्षयाप्यधिकां कां कां विपत्तिं दातुमिच्छसीत्यहं न जाने इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

किंच—

**खलोल्लापाः सोढाः कथमपि तदाराधनपरै-**
**र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।**
**कृतश्चित्तस्तम्भः प्रहसितधियामञ्जलिरपि**
**त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥ ६ ॥**

खलोल्लापा इति ॥ खलानां दुर्जनानामुल्लापा नीचभाषणानि तेषां खलाना-माराधनं सेवनं तस्मिन्परास्तत्परास्तैरेवंविधैरस्माभिरिति शेषः । कथमपि महा-सङ्कटेन सोढा मर्षिताः, हसितं तदुपहसितमपि अन्तरभ्यन्तरे तत्कृतकटुभा-षणैरुत्थितं बाष्पं नेत्राश्रु निगृह्य निरुध्य शून्येन स्तब्धेन । कार्याकार्यविचा-रशून्येनेति यावत् । एवंविधेन मनसा सोढमिति लिङ्गविभक्तिविपरिणामे-नान्वयः । तथा चित्तस्यान्तःकरणस्य स्तम्भो रोधः वृत्तिनिरोधेन स्थिरीकर-णमिति यावत् । कृतः । तथा प्रहसिते परोपहसिते धीर्बुद्धिर्येषां तेषां परोपह-सितकर्तॄणामञ्जलिर्नमस्कारोऽपि कृतः, तथापि मोघा निष्फला आशा यस्या

एवंविधा निष्फला हे आशे; त्वं अतःकारितान्नर्तनादपरमन्यत् मां किं नर्तयसि नर्तनं कारयसि । शिखरिणी वृत्तम् ॥

जगतो मोहं वर्णयति—

**आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं**
**व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।**
**दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते**
**पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ७ ॥**

आदित्यस्येति ॥ इदं जगत् मोहमयीं मोहप्रचुरां प्रमाद एव मदिरा तां पीत्वा उन्मत्तभूतं कर्तव्याकर्तव्यविचारशून्यम् । अभूदिति शेषः । तदेव विवृणोति—आदित्यस्य सूर्यस्य गतागतैरस्तोदयरूपैर्गमनागमनैः अहरहः प्रतिदिनं पुरुषस्य जीवितमायुः संक्षीयते नश्यति । तथा बहवोऽनेके कार्यभाराः कार्यातिशयास्तैर्गुरुभिर्महद्भिः व्यापारैर्व्यवहारैः कालः कियान् गतश्चेति न विज्ञायते पुरुषेणेति शेषः । तथा जन्मोत्पत्तिः जरा च विपत्तिरापत्तिश्च मरणं च तेषां समाहारस्तं दृष्ट्वा स्थितस्यापि पुरुषस्य त्रासो जन्मादिजन्यं भयं नोत्पद्यते । जन्मादिविपत्तीर्दृष्टवतोऽपि पुरुषस्य तत्प्रयुक्तं भयं न भवतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

विचारवतो जनस्य स्थितिं वर्णयन्नाह—

**दीनादीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा**
**क्रोशद्भिः क्षुधितैर्निरन्नविधुरा दृश्येत चेद्गेहिनी ।**
**याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं**
**को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ ८ ॥**

दीनादीनेति ॥ चेद्यदि दीनेभ्योऽपि अतिशयितानि दीनानि मुखानि येषां तैः, क्षुधितैः क्षुधायुक्तैः अतएव क्रोशद्भिराक्रोशद्भिः शिशुकैर्बालकैः सदैव निरन्तरमेव आकृष्टं जीर्णमम्बरं वस्त्रं यस्याः सा । यद्वा दीनेति पृथक्पदम् । आकृष्टजीर्णाम्बरा अतएव दीनेत्यर्थः । निरन्ना शिशुभ्योऽपि देयान्नरहिता अतएव विधुरा विकला । किंकर्तव्यतामूढेति यावत् । "विधुरं स्यात्प्रविश्लेषे न द्वयोर्विकले त्रिषु" इति मेदिनी । एवंविधा गेहिनी भार्या दृश्येत दृष्टिगोचरा भवेत् तथापि को मनस्वी जनः याच्ञाया भङ्गस्तस्य भयेन गद्गदं यथास्यात्तथा गलन्ति मुखाद्बहिर्निर्गतानि, त्रुट्यन्ति स्खलन्ति अत एव विलीनानि लुप्तानि अक्षराणि वर्णा यस्मिन्कर्मणि यथा भवति तथा स्वस्य

दग्धं यज्जठरमुदरं तस्यार्थे वदेत् । अपि तु न कोऽपीत्यर्थः । विचारवाञ्जनः पूर्वार्धोक्तविशेषणविशिष्टां भार्यां दृष्ट्वापि दुष्टजठरभरणार्थं कस्याप्यग्रे न याचत इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

शरीरिणां मरणस्यातिभयहेतुत्वं वर्णयन्नाह—

**निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः**
**समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।**
**शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने**
**अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ ९ ॥**

निवृत्तेति ॥ यद्यपीति सर्वत्र संबध्यते । भोगस्य विषयभोगस्येच्छा निवृत्ता, पुरुषस्य पुरुषत्वस्य बहुमानोऽभिमानो विगलितो नष्टः । समानाः स्वसमानवयसः पुरुषाः सपदि तत्कालम् । शीघ्रमिति यावत् । स्वर्याताः स्वर्गं प्राप्ताः मृता इति यावत् । सुहृदोऽवशिष्टसंबन्धिनो जीवितं समं स्वसमानं येषां ते स्वजीविततुल्याः आसन्निति शेषः । उत्थानमासनाच्चलनं शनैः । मन्दमभवदिति शेषः । च पुनर्नयने लोचने घनं निबिडं यत्तिमिरं रोगविशेषस्तेन रुद्धे । अवलोकनासमर्थ इति यावत् । जाते । अत्र सर्वत्र वृद्धत्वमेव हेतुः । तदपि एतादृशीमवस्थां प्राप्तोऽप्ययं कायो देहः मरणरूपो योऽपायो नाशस्तेन चकितो भीतो भवति मरणं नेच्छतीत्यर्थः । यतो धृष्टः । अहो इत्याश्चर्ये । तस्मान्मरणभयसदृशमन्यद्भयं नास्तीति भावः । शिखरिणी वृत्तम् ॥

इतरपश्वादिवृत्त्यपेक्षया मनुष्यवृत्तेर्वैराग्यजनकत्वेन श्रैष्ठ्यं दर्शयन्नाह—

**हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं**
**व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।**
**संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां**
**यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १० ॥**

हिंसेति ॥ हिंसया शून्यं रहितं, अयत्नेनाश्रमेण लभ्यं लब्धुं योग्यमेवंविधं व्यालानां सर्पाणामशनं भोजनं धात्रा ब्रह्मणा मरुद्वायुरूपं कल्पितं कृतम्, तथा पशवस्तृणाङ्कुरान् भुञ्जन्ति ते भुजः, तथा स्थलीमकृत्रिमभूमिं शेरते त एवंविधाः सृष्टाः । मनुष्यातिरिक्तानां प्राणिनामुपलक्षणमिदम् । संसार एवार्णवः समुद्रस्तस्योल्लङ्घने क्षमा समर्था धीर्येषां तेषां नृणां सा वृत्तिर्निष्कामयजनयाजनादिका कृता । सा का । यां सततमन्वेषयतां मृगयतां पुरुषाणां सर्वे गुणाः सत्त्वादिगुणकार्याणि जन्ममरणादिरूपसंसारप्रयोजकानि समाप्तिं लयं प्र-

यान्ति गच्छन्ति । तस्मादीश्वरेण पश्वादीनां साधारण्येन वृत्तिकल्पनेऽपि नृणां संसारोल्लङ्घनक्षमबुद्धिप्रदानात्तैस्तु यया वृत्त्या संसारोच्छेदः स्यात्सैव वृत्तिराश्रयणीयेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

इह कर्मभूमौ मनुष्यजन्म प्राप्य भगवद्ध्यानयागादिकर्मकान्तालिङ्गनरूपत्रितयमकुर्वतः पुरुषस्य जन्मनो वैयर्थ्यं प्रतिपादयन्नाह—

**न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये**
**स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।**
**नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं**
**मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ११ ॥**

न ध्यातमिति ॥ संसारस्य विच्छित्तये नाशाय ईश्वरस्य जगन्नियन्तुः परमेश्वरस्य पदं चरणं न ध्यातं न ध्यानविषयीकृतम् । अस्माभिरिति शेषः । एवमुत्तरत्रापि । ईश्वरध्यानं कृत्वा मोक्षसुखं न साधितमिति भावः । तथा स्वर्गस्य द्वारं तस्य यत्कपाटं तस्य पाटन उद्घाटने पटुः समर्थो यो धर्मो यागादिः सोऽपि नोपार्जितो न संपादितः । न कृत इति यावत् । यागादिना स्वर्गसुखं न साधितमिति भावः । तथा नार्याः पीनौ पुष्टौ यौ पयोधरौ स्तनौ तयोरूर्वोः सक्थ्नोश्च युगलं युग्मं स्वप्नेऽपि नालिङ्गितं नाश्लेषितम् । स्त्रिया आलिङ्गनादिना विषयसुखमपि न साधितमित्यर्थः । किंतु मातुर्जनन्याः केवलं यौवनं तारुण्यमेव वनं तस्य छेदे वयं कुठाराः कुठारसदृशा जाताः स्मेति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥

इह संसारे यथेच्छं भोगादीनामप्राप्त्या जन्मनो वैयर्थ्यमाह—

**भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।**
**कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ १२॥**

भोगा इति ॥ भोगा विषयभोगा न भुक्ता न सेविताः । अस्माभिरिति शेषः । एवमुत्तरत्र । किंतु वयमेव भुक्ताः । निगीर्णा इति यावत् । कालेनेति शेषः । तथा तपः कृच्छ्रचान्द्रायणादि न तप्तं न कृतं किं तु वयमेव तप्ताः दुःखं प्रप्ताः । दुःखनाशहेतुभूतं तपो न तप्तमित्यर्थः । तथा कालो घटिकादिर्न यातो न गतः किं तु वयमेव याताः । यस्मिन्काले यदुचितं कर्म तद्विहीना जाता इत्यर्थः । तथा तृष्णा स्पृहा न जीर्णा किं तु वयमेव जीर्णाः शिथिला जाताः । तृष्णाशान्तिर्न जातेत्यर्थः । तस्मात्केनापि प्रकारेण न जन्मनः साफल्यमभूदिति भावः । उपजातिर्वृत्तम् ॥

फलाभिसंधिपूर्वकं सकामं कर्माचरद्भिरस्माभिः परमार्थहेतुभूतं निष्कामं कर्म कदापि नाचरितमित्याह—

**क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः**
**सोढा दुःसहशीतवाततपनाः क्लेशान्न तप्तं तपः ।**
**ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं**
**तत्तत्कर्म कृतं यदेव मुनिभिस्तत्तत्फलैरञ्चितम् ॥ १३ ॥**

क्षान्तमिति ॥ क्षमया हेतुना परदत्तदुःखादिकं न क्षान्तं न सोढम् । मयेति शेषः । एवं सर्वत्र । किंतु भयादिहेतुना क्षान्तमित्यर्थः । गृहे उचितं योग्यं सुखं संतोषतः संतोषेण न त्यक्तं किंतु पराधीनत्वादिना त्यक्तम् । दुःसहाः शीतं शैत्यं वातो वायुः तपन ऊष्मा च ते सोढाः क्षान्ताः परंतु क्लेशाद्दुःखात्तपो न तप्तम् । अहर्निशं वित्तं द्रव्यं ध्यातं चिन्तितं परंतु नियमिता ये प्राणास्तैः शम्भोः पदं न ध्यातम् । किंतु तत्तत्कर्म कृतम् । तत्किम् । यदेव मुनिभिस्तत्तत्फलैस्तेषां तेषां कर्मणां तानि तानि वा फलानि तैरञ्चितं पूजितम् । आदरपूर्वकं कृतमिति यावत् । शार्दूलविक्रीडितं वृत्तम् ॥

आमरणपर्यन्तं केनापि प्रकारेण तृष्णापूर्तेरभावात्तद्विषये यत्नो न कार्य इति सूचयन्नाह—

**वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।**
**गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥**

वलिभिरिति ॥ मुखमाननं वलिभिराक्रान्तं व्याप्तम् । शिरो मस्तकं पलितैः सितकेशैरङ्कितं चिह्नितमभूदिति शेष उभयत्रापि । गात्राणि हस्ताद्यवयवाः शिथिलायन्ते । स्वक्रियाकरणेऽसमर्था भवंतीत्यर्थः । परंतु एका तृष्णा तरुणायते तरुणीवाचरति । कदापि शान्ता न भवतीत्यर्थः । अनुष्टुब् वृत्तम् ॥

कर्मवशात्स्वस्मिन्प्राप्तं दौर्गत्यं न शोचनीयमिति श्लेषमर्यादया चन्द्रसूर्यदृष्टान्तपूर्वकं सूचयन्नाह—

**येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।**
**तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १५ ॥**

येनैवेति ॥ येनैवाम्बरखण्डेन वस्त्रखण्डेन पक्षे आकाशभागेन । निशि रात्रौ चन्द्रमाः संवीतो वेष्टितस्तेनैव अम्बरखण्डेन दिवा दिवसे भानुः सूर्योऽपि संवेष्टितो भवति । एतयोः सर्वजगन्निर्वाहकरणयोरपि सूर्याचन्द्रमसो-

दौर्गत्यं एकवस्त्रखण्डेन निर्वाहकारणरूपं दैन्यमस्ति । अहो इत्याश्चर्यमेतत् । एवं समर्थयोरप्येतयोरेतादृशदौर्गत्यसत्वे काऽस्माकं कथेति भावः । अनुष्टुब् वृत्तम् ॥

पुरुषस्य स्वयमेव विषयत्यागोऽत्यन्तसुखहेतुरिति सूचयन्नाह—

**अवश्यं यातारश्चिरतरमुषित्वापि विषया**
**वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।**
**व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः**
**स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १६ ॥**

अवश्यमिति ॥ विषया भोग्यपदार्थाश्चिरतरं बहुकालमुषित्वापि वासं कृत्वापि अवश्यं यातारो गन्तारो गमिष्यन्त्येव तेषामनित्यत्वात् । एवं सति बुद्ध्या विषयत्यागे स्वयं गमने च वियोगे विश्लेषे को भेदः । न कोऽपीत्यर्थः । यद्येन भेदेन जनः स्वयममून् विषयान्न त्यजति । विषयाणां इच्छया गमने पुरुषेण बुद्ध्या त्यागे वियोगे भेदाभावेऽपि स्वयं गमने दुःखहेतुत्वं बुद्ध्या त्यागे च सुखहेतुत्वमिति सूचयितुं फलभेदं दर्शयति—व्रजन्त इति । एते प्रसिद्धा विषयाः स्वातन्त्र्यात्स्वेच्छया व्रजन्तो गच्छन्तः सन्तो मनसोऽतुलोऽनुपमो यः परितापस्तस्मै भवन्ति । मनसो दुःखदा भवन्तीत्यर्थः । स्वयं पुरुषेण त्यक्तास्तु अनन्तमपारं शमसुखं शान्तिसुखं विदधति कुर्वते । हि निश्चयेन । तस्माद्विषयत्यागस्य शान्तिसुखहेतुत्वात्तत्यागोऽवश्यं पुरुषेण कर्तव्य इति भावः । शिखरिणीवृत्तम् ॥

तृष्णाशान्तेरत्यन्तसुखहेतुत्वमाह—

**विवेकव्याकोशे विदधति शमे शाम्यति तृषा-**
**परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ।**
**जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपण-**
**स्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १७ ॥**

विवेकेति ॥ विवेकस्य व्याकोशो विकसनं यस्मिंस्तस्मिन् शमे विदधति कुर्वति सति तुङ्गे उन्नते तृषायाः परिष्वङ्ग आश्लेषे शाम्यति सति, सा परिणतिः, सुखविशेषरूपः परिणामः प्रसरतितरामतिशयेन विस्तारं प्राप्नोति । सा का । यस्यां परिणतौ विषये जरया जीर्णमैश्वर्यं, ग्रसनं अन्नादिभक्षणं तन्निमित्तो गहनो गम्भीरो य आक्षेपो निन्दा च ताभ्यां कृपण एवंविधो

